KÂVYAMÂLÂ. 78.



# THE S'ṚINGÂRA-SARVASVA-BHÂṆA

OF

NALLÂ-DÎKSHITA.



EDITED BY

MAHÂMAHOPÂDYÂYA PAṆḌIT S'IVADATTA

Head Pandit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂSHÎNÂTH PÂṆḌURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DADAJI'S 'NIRNAYA-SAGAR' PRESS.

BOMBAY.

1902.

*Price* 5 *Annas.*

काव्यमाला. ७८.

श्रीनल्लाकविविरचितः

# शृङ्गारसर्वस्वभाणः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१९०२



मूल्यं ५ आणकाः ।

# श्रीनल्लाकविः ।

श्रीमानसौ **बालचन्द्रदीक्षित**तनूजो **नल्लाकविः** कौशिकगोत्रोत्पन्नश्छन्दोगश्चोलेषु **कुम्भघोण**नगरपरिसर**कण्डरमाणिक्या**ख्याग्रहारे जनिमापद्य **रामनाथमखीन्द्रेण परमशिवेन्द्राचार्य**-तच्छिष्य**सदाशिवब्रह्मेन्द्रा**भ्यां च संशिक्षितः शास्त्रेषूनविंश-वया एव स्वसख्युर्**वैद्यनाथदीक्षितस्य** वचनगौरवेण भाणमिमं **सुभद्रापरिणयना-टकं** च रचयामास । क्रमशोऽन्याश्च काश्चन सुकृतीः । तासु च, **अद्वैतमञ्जरी**, तद्व्या-ख्या **परिमला** चेति द्वावेव ग्रन्थावद्य समुपलभ्येते । अस्य गुरू **रामनाथमखीन्द्रः**, तञ्जनगराधीशस्य **शहजि**महाराजस्य सदस्यः श्रीमतो **रामभद्रदीक्षितस्य** समकालिक इति[2] **षड्दर्शनीसिद्धान्तसंग्रह**स्यामुखश्लोकेभ्यः प्रतीयते । **परमशिवेन्द्राचार्यः** प्रख्यात[3]**कुशलविजयनाटका**दिग्रन्थानां प्रणेतुस्तञ्जपुराधिनाथेन **श्रीशहजि**महाराजेन

---

१. अद्वैतमञ्जर्या अवसाने,

'नल्लासुधीनिबद्धेयमद्वैतरसमञ्जरी ।
कर्णावतंसपदवीं विबुधैरधिरोप्यताम् ॥'

इति, तद्व्याख्यायाम् 'इति श्रीकौशिककुलजलधिचन्द्रश्रीबालचन्द्रदीक्षिततनूभवस्य श्रीमत्परम-हंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रपादश्रीसदाशिवब्रह्मपूज्यपादानुग्रहभाजनस्य श्रीनल्लाकवेः कृतिषु स्वकृतायां अद्वैतरसमञ्जर्यां व्याख्या परिमलाख्या संपूर्णा ।' इति च संदृश्यते.

२. षड्दर्शनीसिद्धान्तसंग्रहे,

'रामभद्राध्वरिवरो रामनाथमखीश्वरः ।
नरहर्यध्वरिमणिः पेरियप्पबुधाग्रणीः ॥
श्रीवेङ्कटेशविबुधः श्रीमान्यज्ञेश्वराध्वरी ।
मखी च श्रीनिवासार्यो महतामपि संमतः ॥
शासनाक्षरमाकर्ण्य शाहराजस्य (A. D. 1684-1711) धीमतः ।
सभैते शास्त्रसिद्धान्तान्संगृह्णन्ति यथामति ॥'

इति रामनाथमखिनो रामभद्रदीक्षितसमकालिकत्वं शहजिमहाराजसदस्यत्वं च स्पष्ट-मुक्तं भवति.

३. कुशलविजयनाटके,

'श्रीरङ्गपट्टणपतित्रिशिरःपुरेशचेञ्जीपुराधिपतितञ्जपुराधिनाथैः ।
उच्चैर्यथोत्तरमुदञ्चितगौरवश्रीरास्ते सुखं शहजिराजपुरेऽधुनासौ ॥
स किल पलकचेरिग्रामवास्तव्यविद्वज्जनमकुटवतसाद्वासुदेवाध्वरीन्द्रात् ।
अधिगतपदवाक्यन्यायतन्त्रस्त्रिलोकीगुरुपरमशिवेन्द्राध्यापितब्रह्मविद्यः ॥'

इति वेङ्कटकृष्णदीक्षितस्य परमशिवेन्द्राचार्यशिष्यत्वं स्पष्टम्.

समुदञ्चितश्रियो **वेङ्कटकृष्णदीक्षितस्य** ब्रह्मविद्यागुरुः, **शिवगीतातात्पर्यप्रकाशिकायाः** प्रणेता च । **सदाशिवब्रह्मेन्द्रः परमशिवेन्द्राचार्य**शिष्यः, ब्रह्मसूत्रवृत्ते**र्ब्रह्मतत्त्वप्रकाशिकाया आत्मविद्याविलासस्य** च कर्ता । अतोऽस्य **नल्लाकवेः** कालो बहुशः ख्रिस्ताब्दीयसप्तदशकावसानभागस्तदुपरितनशतकपूर्वभागश्च, नातः पराचीन इति विनिश्चेतुं पार्यते ॥

इति

**टि. एस्. कुप्पुस्वामिशास्त्री.**

---

१. आत्मविद्याविलासे,

'निरवधिसंसृतिनीरधिनिपतितजनतारणस्फुरन्नौकाम् ।
परमतभेदनघुटिकां परमशिवेन्द्रार्यपादुकां नौमि ॥
देशिकपरमशिवेन्द्रादेशवचोद्बुद्धदिव्यमहिमाहम् ।
स्वात्मनि विश्रान्तिकृति सरसं प्रस्तौमि किंचिदिदम् ॥'

इति.

## श्रीनल्लाकविविरचितः

# शृङ्गारसर्वस्वभाणः ।

विष्णुब्रह्मपुरंदरादिविबुधैः सान्द्रे विवाहाङ्गणे
प्रेमावेशवशात्परस्परहठाश्लेषे धृतोत्कण्ठयोः ।
गौरीशंकरयोः ससंभ्रममणीपीठाधिरोहे मिथः
संघर्षेण समुद्गतः पुलकसंभारः शिवायास्तु नः ॥ १ ॥

अपि च ।

नरगजमयं मायाशक्त्या वहन्वपुरुज्ज्वलं
जयति महसामेकस्तोमस्तरङ्गितमङ्गलः ।
अभिनवसुधानिष्यन्दानां गिरामुपगुम्फनं
परिणमयति स्फारं यद्ध्यानपद्धतिसंभवः ॥ २ ॥

अपि च ।

करकिसलयराजत्कीरशावाभिरामां
सरसिजभवदारान्वाचमाराधयामः ।
श्रुतिमधुरमधूलिस्यन्दिसूक्तिक्रमेभ्य-
श्चिरसरसकविभ्योऽप्यञ्जलिं कल्पयामः ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(सप्रश्रयमञ्जलिं बद्ध्वा ।)

वितन्वन्यत्कोणं विशिखमचिरादेव भगवा-
ननङ्गः केनापि त्रिभुवनमजय्यं विजयते ।

यदालोको यूनामपहरति चेतांसि मसृणः
स वस्तन्यादन्यादृशसुखमपाङ्गो मृगदृशाम् ॥ ४ ॥

(इति पुष्पाञ्जलिं विकीर्य । नेपथ्याभिमुखमवलोक्य ।) मारिष, इतस्तावत् ।

(प्रविश्य)

**पारिपार्श्वकः**—भाव, अयमस्मि ।

**सूत्रधारः**—इह खलु सकलपुरललामभूते विविधाद्भुतनिवासभुवि पुरुहूतपुरातिशायिनि मध्यार्जुननाम्नि नगरे वन्दारुमुकुन्दपुरंदरारविन्दभवमुखवृन्दारकवृन्दमुकुटमणिगणकिरणपुञ्जमञ्जरितचरणपल्लवस्य लीलायितसमस्तभुवनस्थितिसंस्थितेर्मन्दस्मितभस्मितपुरत्रयस्य निटिलहुतभुगाहुतीकृतरतिप्रणयिनो वामाङ्गीकृतवामदृशः शेखरीकृतकुमुदबान्धवस्य कवलीकृतकालकूटस्य महालिङ्गनाम्नो भगवतः शितिकण्ठस्य वसन्तोत्सवदर्शनोत्सुकतया संगतानामनङ्गतन्त्रकलापदेशिकानां वैदेशिकानां विदुषामेषा परिषदुपस्थिता । तस्मादस्माभिरियं केन रूपकेण समाराधयितव्या ।

**पारिपार्श्वकः**—(सहर्षम् ।) अद्य खलु साफल्यं प्रयोगतन्त्रपरिश्रमस्य ।

अवेक्ष्य विद्यावैशद्यमहो सर्वे सभासदः ।
कन्दलीभवदानन्दाः कम्पयेयुः शिरांसि यत् ॥ ५ ॥

भाव, तर्हि कस्य कवेः कृतिः प्रयोक्ष्यते ।

**सूत्रधारः**—(स्मरणमभिनीय ।)

जयति किल चोलमण्डलमण्डनमुद्दण्डपण्डिताध्युषितम् ।
कण्डरमाणिक्कमिति ख्यातं महदग्रहारमाणिक्यम् ॥ ६ ॥

असौ तत्र श्रीमानमृतरसधारासहचरीं
गिरां देवीं बिभ्रद्गजमुखकृपातः परिणताम् ।
सपर्यासंतुष्यद्गुरुपरिवृढानुग्रहपरि-
स्फुरत्प्रत्यग्ज्योतिर्जयति किल नल्ला बुधमणिः ॥ ७ ॥

अयं नाम कवनं नाम कियद्दूरमुभयोः । कथंचन परिणतकवनप्रणयनीयमधुरप्रबन्धसंदर्भनिर्वाहमहासाहसमिति बहुविधशङ्काकलङ्कसंकुलितं कविकुलमालक्ष्य कविनामुनैवोक्तम्—

निबध्नन्ति स्वैरं कृतिमिह कियन्तो न भुवने
रसं किंतु व्यङ्क्तुं प्रभवति कविष्वेषु कतमः ।
मम श्रीमल्लक्ष्मीदरदरकृपापाङ्गितगिरः
प्रबन्धेऽस्मिंश्चेतः कुतुकमनुबध्नाति तदपि ॥ ८ ॥

इति ।

**पारिपार्श्वकः**—को न वेद विश्रुतः खल्वयम्, यस्य विद्यागुरुः सर्वतोमुखप्रमुखमखसंतर्पितकंदर्पशासनः षड्दर्शनीप्रवचनप्रौढशिष्यप्रशिष्यपरम्परासंपादितयशःकन्दलः श्रीमाम्नामनाथमखी ।

**सूत्रधारः**—

बालचन्द्रमखीन्द्रस्य तनयो विनयोज्ज्वलः ।
स भाणं प्राणयद्बाल्ये सख्युर्वचनगौरवात् ॥ ९ ॥

**पारिपार्श्वकः**—कः पुनरस्य सखा ।

**सूत्रधारः**—

कामारातिपदारविन्दयुगलध्यानैकबद्धादर-
स्तन्माहात्म्यवशेन शैशवदशासंप्राप्तविद्यायशाः ।
दान्तो रत्नगिरीश्वराध्वरिसुतः स्वाधीनपातञ्जल-
व्याहारोऽयमलंकरोति जगतीं श्रीवैद्यनाथः सुधीः ॥ १० ॥

तदमुनैव कविना संदर्भितं शृङ्गारसर्वस्वं नाम भाणरूपकमभिनेतव्यम् ।

कवेरेता वाचः परिविकचमल्लीमधुमुचः
सभास्ताराः सर्वे सरससरसा नः परिणताः ।
वयं च प्रख्याता दिशि दिशि तथा नाट्यकलया
गुणस्तोमो दैवादयमुदयमासादयति नः ॥ ११ ॥

(समन्तादवलोक्य ।)

माकन्दपल्लवसमुल्लसितैर्वनान्तै-
र्माद्यत्पिकीगलगलत्कलकूजितैश्च ।
मन्दानिलेन मधुसौरभनिर्भरेण
मासो वसन्त इति संप्रति तर्कयामि ॥ १२ ॥

अपि च ।

समुल्लसितमल्लिकाकुसुमगन्धसंभावितः
स्फुरद्बकुलकुड्मलान्तरमिलन्मधूलीधरः ।
हरन्हरणलोचनारतिपरिश्रमं विभ्रमैः
शनैरिह चलत्यसौ मलयशैलबालानिलः ॥ १३ ॥

मारिष पारिपार्श्वक, तत्प्रयोजय पात्रमचिरेण ।

**पारिपार्श्वकः**—यदाज्ञापयति भावः । (इति निष्क्रान्तः ।)

**सूत्रधारः**—(निरूप्य ।)

भ्रमरोऽयं प्रतिवनं भ्रमन्नुद्भूतकूजितः ।
विडम्बयति संभ्रान्तं विलपन्तं वियोगिनम् ॥ १४ ॥

(नेपथ्ये ।)

स्वर्णाङ्गरागितनिसर्गशरीरकान्त्या
कर्णावतंसितदृगुत्पलपत्रसीम्ना ।
हारीकृतस्मितपरम्परया तरुण्या
हा किं करोम्यपहृतं हृदयं मदीयम् ॥ १५ ॥

**सूत्रधारः**—(निरूप्य ।)

कौसुम्भवस्त्रपरिमण्डितमध्यभागः
कह्लारकोरकविराजितकर्णपूरः ।
श्मश्रुप्ररोहदलसंदलिताननेन्दुः
कन्दर्पदर्पदमनस्तरुणः क एषः ॥ १६ ॥

(विमृश्य ।) अयं किल मम श्यालः कनकलतावियुक्तस्यानन्दशेखरस्य भूमिकामादाय इत एवाभिवर्तते । तदहमप्यनन्तरकरणीयाय सज्जीभवामि । (इति निष्क्रान्तः ।)

इति प्रस्तावना ।

---

(ततः प्रविशत्यनङ्गशेखरः ।)

**अनङ्गशेखरः**—('स्वर्णाङ्गरागित–' (१५) इति पुनःपुनः पठति ।)

उत्तुङ्गस्तनतटमुत्पलायताक्षं
कस्तूरीतिलकविलासि फालदेशम् ।

उत्तालालकभरमूहनीयमध्यं
तत्तादृग्वरतनुरत्नमभ्यपश्यम् ॥ १७ ॥

अहो, परदारावलोकनं परमदुःखकारणमिति सत्यमेव सतां वचनम् । यतः ।

शकलयति मनो मे शम्बरारिः शरौघैः
शिथिलयति शरीरं शीतलो गन्धवाहः ।
प्रबलयति पिकानां पञ्चमः कामरोगं
द्विगुणयति च तापं दारुणश्चन्द्रपादः ॥ १८ ॥

अये दग्धमकरध्वज, किं कारणं मह्यं द्रुह्यसि । अथवा किं करोतु भवान् । स्वभावः खलु ते विरहिजनद्रोहः ।

चेतोहरा सा मम पूर्वपुण्यैर्दृष्टिप्रिया दृष्टिपथं प्रयाता ।
तामग्रतः स्थापयितुं क्षणार्धं वृथाभ्यसूयो विधिरक्षमोऽभूत् ॥ १९ ॥

हा चपलाक्षि, साकूतया दृष्ट्या मां निहत्य तत्क्षणमेव निर्दाक्षिण्यं कथं निर्गतासि ।

सरभसमुपसृत्य संनिधाने चरणरणन्मणिनूपुराभिरामम् ।
स्मरशरपरिपीडिताङ्गकं मामयि दयिते सुदृढं परिष्वजस्व ॥ २० ॥

(स्मरणमभिनीय ।) आः, कथं विस्मरामि । यत्किल पूर्वस्मिन्वासरे विरहवेदनया मूर्च्छितं मामुपेत्य मनोरथानुकूलवचनेन समाश्वसितवती चन्द्रमुखी । तदलमधुना मुधा परिदेवितेन । (परितो विलोक्य ।) कथं परिणतप्रायैव प्रभातवेला ।

गच्छत्यस्तनितम्बमम्बरमपाकुर्वन्करैश्चन्द्रमाः
संगच्छन्त इव प्रियैस्तत इतो निष्क्रम्य चक्राङ्गनाः ।
प्रच्छन्नाः कुलटा विटान्विजहति प्रायस्त्रियामात्यया-
न्नक्तं जागरणेन वारवनिता निद्रातुमुद्युञ्जते ॥ २१ ॥

अपि च ।

परिमलभरानुषङ्गप्रकटीकृतपद्मिनीपरिष्वङ्गः ।
अलसो मधुरसपानादहरारम्भे परिभ्रमत्यनिलः ॥ २२ ॥

(पुरोऽवलोक्य ।)

पूर्वक्ष्माधरशिखाशिखराधिरूढो
लाक्षारसारुणवपुर्भगवान्दिनेशः ।
प्राचीमुखस्य परिकर्मविशेषलिप्सोः
काश्मीरपङ्कतिलकश्रियमातनोति ॥ २३ ॥

अथ महोमहोन्नतस्य जगदेकदीपस्य भगवतो भानुमतोऽपि कितवाचारचातुरी । तथा हि ।

प्राचीकुचमुदयाद्रिं परिरभमाणैः करैस्तपनः ।
कंचन विकासयोगं कुरुते सरसीमुखाब्जेषु ॥ २४ ॥

(पुरो विलोक्य । सहर्षम् ।) एषा खलु मञ्जुलमणिमञ्जीरकाञ्चीरत्नकञ्चुलीचारुहारचीनाम्बरकनकवलयकटकताटङ्कमुखविभूषणक्रयणपरायणरमणीकुलविलासरमणीया प्रत्यापणप्रसार्यमाणकर्पूरकस्तूरीहरिचन्दनपटवासवासनासनाथचारुसमीरकिशोरसंचारघुमघुमायितपरिसरहरिदन्तराला सकलविलासिलोकसंकेतसाधिका पण्यवीथिका । अपूर्वोऽयं पन्थाः । तदमुनैव साधयामि । (इति विपणिप्रवेशमभिनीय । सहर्षम् ।) इह खलु संचरन्ति चञ्चलतरमञ्जीरझलज्झलसिञ्जितरञ्जितनिखिलदिङ्मुखं पथि पदविक्षेपैरवनीमम्बुजवनीमापादयन्त्यः, मन्दहासमरीचिकाभिर्मल्लीमतल्लीसुभगस्तबकनिकुरम्बकदम्बमम्बरमारचयन्त्यः, क्वचित्क्वचित्कटाक्षविक्षेपेण कुवलयवलयनिलयं कलयन्त्यः, करकमलार्पितकर्पूरवीटिकाः, कपोलगर्भितताम्बूलविलोभनीयाः, पुरंदरपुरपुरंध्रिका इव भूतलमवतीर्णाः, पुष्पशरवरवर्णिन्य इव बहुधा विभिन्नाः, सुन्दरयुवजनसंदर्शनकृतादराः, बदरामलकलिकुचबिल्वतालनालिकेरकुम्भगिरिसदृशदशावहस्तनभारशालिन्यो विलासिन्यः ।
(निरूप्य ।)

आस्तीर्णकालकम्बलविन्यस्तानेकवलयदामानः ।
कतिचन धूर्तयुवानः कलयन्त्यबलाकरेषु वलयानि ॥ २५ ॥

(निरूप्य ।)

विद्युल्लतेव नवविद्रुमवल्लिकेव
ज्योत्स्नेव रत्नमयकृत्रिमपुत्रिकेव ।
मायेव पुष्पधनुषो मम पुण्यभूम्ना
कैषा परिस्फुरति कैतकपत्रगौरी ॥ २६ ॥

हन्त, सौन्दर्यमस्या निर्वर्णयितुं सहस्रमपि लोचनानि न पर्याप्नुवन्ति ।

निन्दायामपि चन्द्रमा न विषयो वक्त्रस्य वामभ्रुवो
न्यक्कारोऽपि वृथा भवत्यसदृशे लीलारविन्दे दृशोः ।
बिम्बश्रीरधरस्य नार्हति परीहासेऽपि लक्षीकृतिं
हैमन्यङ्गरुचो विडम्बनमपि ह्रीणे कुतो जायताम् ॥ २७ ॥
पश्यति चेदियमबला फलितं नः पूर्वसंचितैः पुण्यैः ।
संलपति सादरं यदि स स्वर्गः स परमपवर्गः ॥ २८ ॥

(सविमर्शम् ।) कथमेषा विद्युल्लता । या किल

यदृच्छासंप्राप्तं क्वचन विजने मामुपवने
विहारैर्व्याहारैरपि परवशीकृत्य चतुरम् ।
रसोद्रेकत्रुट्यत्त्वमहमभिमानं परवधू-
रमर्यादारम्भं किमपि किमपि क्रीडितवती ॥ २९ ॥

तावदेनां संलापयिष्यामि । (इत्युपसृत्य ।) विजयस्व पञ्चबाणपाणिकृपाणिके । (सहर्षम् ।) किं ब्रवीषि—'प्राणवल्लभ, दुर्लभदर्शनस्य भवतः सुप्रातमेतदहः संजातम् ।' इति । ममाप्येष वादस्तुल्य एव । विद्युल्लते, चलति किमप्रतिरथस्ते मनोरथः । किं ब्रवीषि—'चिरप्ररूढाद्विशङ्कटात्पातिव्रत्यसंकटान्मोचयित्वा कथंचिदात्मानं संप्रति कामचारव्रताचारेण भगवन्तं कामदेवमुपासीना स्वच्छन्दं विहरामि ।' इति । (सविस्मयम् ।) कथमिदमप्येवं नाम । (सश्लाघम् ।) उदारः कल्पः । कष्टं नाम कामिनीनां पतिगृहवासपातकम् । विद्युल्लते, महत्येव प्रत्यूषे किंनिमित्तं प्रस्थितासि ।

कथमेषा विरलवलयं प्रकोष्ठं दर्शयति । अतो मन्ये वलयमोचनं सनिमित्तमिति । ब्रूहि । कुतस्ते वलयभङ्गः । कथमेषा सलज्जस्मितं वदनमवनमयति । अनेन च रतिकलहो वलयभङ्गमूलमिति व्यज्यते ।

स परमभिवन्दनीयः सुन्दरि संभोगसंभ्रमे येन ।
परिमृदितासि निकामं भ्रमरेण शिरीषकलिकेव ॥ ३० ॥

किं ब्रवीषि—'तस्यामपि संकटावस्थायामगणिततादृगातङ्को मामुद्दिश्य महत्साहसं कृतवानसि ।' इति । कः संदेहः ।

प्राकारमुल्लङ्घ्य महानिशीथे प्रविश्य कृत्स्नाद्भवनं त्वदीयम् ।
निद्राति नाथे तदुपान्त एव त्वयान्वभूवं किल संगतानि ॥ ३१ ॥

किं ब्रवीषि—'तादृशोऽपि त्वमद्य स्वाधीनामपि मां किं न संभावयसि ।' इति । महानयमपराधः । किंतु स्वच्छन्दचारिणीति न जानामि ।

अहरहरितः परं त्वामहमुपभोक्ष्ये निरातङ्कः ।
अनुमन्यसे तथा चेदनुग्रहः खल्वयं दयिते ॥ ३२ ॥

अयि वलयविक्रयिन्, एनां प्रति किं ब्रवीषि—

'हैमानि रत्नखचितानि मनोहराणि
योग्यान्यमूनि वलयानि तवैव नाम ।
मूल्यं विनैव मुदितो वितरामि ताव-
देह्येहि सुन्दरि फलं किमतिक्रमेण' ॥ ३३ ॥

इति । चतुरतरमुपक्रान्तमनेन । यतः ।

अस्या वध्वाः कनकवलयामोचने वीतशङ्कं
प्राप्तुं शक्यः करकिसलयस्पर्शकल्याणयोगः ।
किं चोदञ्चन्नयनवलनं क्लृप्तसीत्कारधारं
व्यक्ताव्यक्ताक्षरमपि वचो लभ्यमभ्यस्यमानम् ॥ ३४ ॥

विद्युल्लते, किं ब्रवीषि—'मानद, सादरमाह्वयतोऽस्यैव तावद्वलयानि क्रीणिष्यामि ।' इति । (रहः ।)

आस्तां समस्तयुवमोहकरं तवेद-
मापादचूडमभिरामतरं शरीरम् ।
हृद्यं त्वदीयवचनामृतमेतदेव
क्रीणाति मामपि जगन्त्यपि कीरवाणि ॥ १५ ॥

(इति पदान्तरे स्थित्वा । विलोक्य च ।)

इदं वलयमुल्लसन्मणिमरीचिकारञ्जितं
करोमि करपल्लवे तव समीहितं चेदिति ।
प्रदर्शनमिवाचरन्परदुरापसंल्लापया
कयापि कुलसुभ्रुवा सरसमेष संभाषते ॥ १६ ॥

(पुनर्निरूप्य ।)

कुचाभ्यामाधत्ते कुलशिखरिकूटस्य विभवं
मुखेनोद्गृह्णाति श्रियमपि शरत्पर्वशशिनः ।
अपाङ्गैरङ्गानामपहरति सर्वस्वमबला
बलाद्यूनामन्तःकरणमियमास्कन्दयति च ॥ १७ ॥

(विमृश्य ।) कथमेषा कलभाषिणी । या किल

कदाचित्कावेरीपरिसरगते नीपविपिने
लताकुञ्जे सद्यस्तनकिसलयस्तोमशयने ।
समारभ्य क्रीडां रसपरवशे मय्युपरते
विलोलभ्रूरेषा स्वयमकृत वीरायितविधिम् ॥ १८ ॥

वलयविक्रयिन्, अनया वलयमूल्यं पृष्टः । किं ब्रवीषि—'दशदीनाराः ।' इति । हन्त, मूर्खप्रलपितमेतत् ।

दीनजनकाङ्क्षणीयैर्दीनारैः किं प्रयोजनं यूनाम् ।
मुखकमलपानमस्या मूल्यमिति ब्रूहि मुग्धवलयानाम् ॥ १९ ॥

अपि कुशलं कलभाषिण्याः । किं ब्रवीषि सनिर्वेदम्—'किं नाम कुशलं कुलवधूनाम् ।' इति । हन्त, कुतः सततं श्वश्रूर्ननान्देति शृङ्खलया निरन्तरनिरुद्धसंचारा पञ्जरबद्धशुकीव शोकमनुभवसि । पश्य । भवादृश्यः पृष्ठी-

कृतशिष्टमर्यादा निर्याता विहरन्ति स्वैरचारिण्यस्तरुण्यः । अद्य प्रभृति त्वमपि विशृङ्खलीभूय सफलीकुरुष्व तारुण्यम् । अरण्यचन्द्रिकां मा कुरु करभोरु, सुकुमारतरं शरीरम् । सभ्रूभङ्गं किं ब्रवीषि—'विरम विरम । श्रोष्यन्ति संनिहिताः पतिबन्धवः ।' इति । तर्हि साधयामि । (इति कतिचन पदानि गत्वा । निरूप्य च ।)

नाहं शक्तिमती विना गुरुजनानुज्ञानमाज्ञाकरी
प्रातः पाथसि शीतले निपतितुं प्रायो न शक्नोमि च ।
मा मा मां स्पृश साहसेन सहसेत्युद्घोषयन्तीं बला-
द्वामाक्षीं वलयप्रसञ्जनमिषाद्गृह्णाति हस्ते युवा ॥ ४० ॥

इयं च ।

पर्याप्तमण्डनवती पाणिधृताम्भोरुहा वरारोहा ।
वीरस्य मकरकेतोर्विक्रमलक्ष्मीरिवाभाति ॥ ४१ ॥

अस्याश्च ।

अद्य व्यक्तं किल कुवलयैश्वर्यमक्ष्णोरुपान्ते
दृष्टं दृष्टं करपरिसरे गौरवं पङ्कजस्य ।
किंच स्पष्टा कनककुसुमा संनिधावङ्ककानां
हन्तेदानीमधरसविधे वीक्षिता विद्रुमश्रीः ॥ ४२ ॥

(निरूप्य ।) कथमेनां कम्बले निषाद्य हस्ते वलयान्यारोपयत्येषः ।

हस्ताग्रे वलयानि यूनि विदधत्यस्मिन्वणिक्कुंजरे
सीत्कारक्षणमीलितक्षणचलद्भ्रूवल्लरी सुन्दरी ।
मन्दं मन्दमये तुदत्यलमलं मा भेत्यधीराक्षरैः
संभोगं चरितार्थमस्य कुरुते तादात्मिकैर्विभ्रमैः ॥ ४३ ॥

अपि च ।

समाप्ते वामाक्ष्याः कनकवलयामोचनविधौ
ग्रहीत्वा पाणिभ्यां करकमलयुग्मं च युगपत् ।
वदंश्चाशीर्वाचः शिरसि रचयन्पल्लवमिव
स्वयं धन्यंमन्यो जयति तरुणः स्वर्णवलयी ॥ ४४ ॥

(पुरोऽवलोक्य। सखेदम्।)

वलयनिकरं भग्नं बालेन्दुसंहतिसुन्दरं
करतलगते पात्रे कृत्वा वदन्परुषं वचः।
कपिरिव नवां मालां बालां सबाष्पविलोचना-
मयमभिपतन्क्रुद्धो वृद्धो बलादनुकर्षति॥ ४५॥

कूलंकषकुचभारा कुङ्कुमकर्दमितमुग्धमणिहारा।
कुन्तलविनिहितमाला कुरुते केयं कुतूहलं बाला॥ ४६॥

(सविमर्शम्।) एषा खलु काञ्चनमालायाः कनीयसी कान्तिमती। तावदेनां विमोचयिष्यामि। (इत्युपसृत्य। सरोषम्।) रे रे नैगमापशद दुरात्मन्, कथमिमां ब्राह्मणीं निःशङ्कमेव स्पृशसि। किं ब्रवीषि—'स्वामिन्, अनया बहुमूल्यानि बहूनि वलयानि विदलितानि।' इति। कान्तिमति, किं ब्रवीषि—'प्रागेव मोचनाद्भङ्गुराणि वलयानि।' इति। नैगम, किं ब्रवीषि—'मा मैवम्।

वलयानि यानि यावद्वामदृशोऽस्याः प्रसारितानि करे।
दलितानि तानि तावद्दर्शनमात्रेण कस्यचिद्यूनः'॥ ४७॥

(अपवार्य।) कान्तिमति, किमेतत्। कथमेषा मौनेनोत्तरमाह। अतः सत्यमेवैतत्। नैगम, किमतः कर्तुमध्यवस्यसि। किं ब्रवीषि—

'अमुमुदन्तमशेषमनुक्रमं कथयितुं दयिताय कुलाङ्गना।
निजमियं निलयं प्रतिनीयते वलयमूल्यपरिग्रहणेच्छया'॥ ४८॥

हन्त, कियतीयं विभीषिका वृद्धवार्धकिनेयस्य। कान्तिमति, अपवार्य साश्रुगद्गदं किं ब्रवीषि—'यदि मम प्राणनाथस्य श्रवणपथमवतरेदियं वार्ता, अशोभनं तर्हि महदापतेत्। अतः किं करिष्यामि।' इति। अयि कातरे, मा भैषीः। अहमासे तव मानसीं व्यथामपसारयितुम्। नैगम, मुञ्चेमां चञ्चलदृशम्। मूल्यादप्यधिकं धनं ते वितरामि। (इति स्वप्रकोष्ठादवमुच्य महार्घं मणिकटकं प्रयच्छति।) कथमेष कङ्कणदानेन संतुष्टः पादयोर्निपत्य निष्क्रान्तः। कान्तिमति, सुखेन याहि पतिमन्दिरम्। किं ब्रवीषि—'परतन्त्रोऽयं जनः कामत्र प्रत्युपक्रियां करिष्यति।' इति।

स्मर मां स्मरतन्त्रेषु स्वतन्त्रेषु विलासिनि ।
धन्यः स्यामियतैवाहमाकल्पं कुलसुन्दरि ॥ ४९ ॥

(परिक्रम्यावलोक्य च । सकौतुकोल्लासम् ।) एषा खलु समुत्तुङ्गमणिशृङ्गसंहतिप्रतिहतसंचारविशदशारदनीरदविभङ्गानुषङ्गशङ्कावहसुधालेपधौतैरहरहरुपचीयमाननटपटुवाद्यमानातोद्यघोषपोषितान्तरालतया साटोपनिष्यन्दत्स्फारनभःसरिदासारभ्रमदायिभिः समुत्तम्भितस्मरजयस्फीतरजतस्तम्भसंभावनीयैः सौधैरभिमण्डिता रम्भाप्रतिरूपवाररम्भोरूपरिषत्कुचकुम्भपरिरम्भघनजघनाभोगोपभोगलब्धनिरतिशयानन्दैर्विटपीठमर्दमुखविदग्धलोकैरवतंसिता शृङ्गाररसप्रथमसमागमवीथिका शृङ्गारवीथिका ।

अधरोत्तरभावमीयुषोरधिमुञ्चं सुदृढोपगूढयोः ।
इतरेतरमीहमानयोरिह यूनोश्चरितं महीयते ॥ ५० ॥

तत्सर्वथा नातिक्रमणीया वेशवीथिका । (इति वेशवीथिकाप्रवेशं नाटितकेन । ऊर्ध्वमवलोक्य ।) लब्धं नयनसाफल्यम् ।

ताम्बूलोद्धरणोद्यता परिगलद्धम्मिल्लमल्लीसरा
नीवीसंयमने निकाममलसं व्यापारयन्ती करम् ।
वक्षोजच्युतमुत्तरीयसिचयं स्थाने पुनस्तन्वती
प्रासादे पवमानसेवनपरा बाला समालक्ष्यते ॥ ५१ ॥

अस्याश्च ।

प्रत्यग्रदन्तपददन्तुरिताधरोष्ठं
घर्माम्बुलेशपरिकम्मितफालदेशम् (?) ।
निःसीमनिःश्वसितनुन्नकुचं नताङ्ग्याः
संभोगमाधुनिकमङ्गमभिव्यनक्ति ॥ ५२ ॥

कथमेषा मत्प्रणयिनी पद्मावती । अनया संभाषितुमिच्छामि । (इति प्रासादमिवाधिरुह्य । उपसृत्य च ।)

अभ्यग्रनखपदाङ्कितमचिरसमुन्मृष्टपत्रमकरीकम् ।
अद्यतनसुरतविह्वलमङ्गं भवदीयमङ्गगे जयतु ॥ ५३ ॥

कथमेषा मद्वचनमनादृत्य मन्दपवनमेवाभिनन्दति । हन्त, मन्दोऽपि कश्चित्कचिन्मान्य एव ।

उत्पुलकगण्डभरैया समुदितसीत्कारधारया सुदृशा ।
संप्राग्घतो युवत्या सादरमालङ्ग्यते पवनः ॥ ९४ ॥

कथमेषा मदधिरोषादिव परावृत्तमुखी तिष्ठति । भवत्वेवम् । (इत्यभिमुखीभूय ।) अयि प्रिये, सुखमास्यते । किं ब्रवीषि—'अलं गोत्रस्खलितेन । सा खलु वक्रमुखी तव प्रिया । कस्त्वं का वाहम् ।' इति ।

स्मर तरलमृगाक्षि प्राक्तनीमस्य मैत्री-
मभिनवमिव किं मामन्यदन्यद्ब्रवीषि ।
दरविकसदुरोजश्लाघनीया ममाङ्के
त्वमनिशमधिरूढा शिक्षिता बन्धभेदे ॥ ९५ ॥

किं ब्रवीषि—'किं नाम वस्तु किंचिदभिमर्शमात्रेण स्वीयं भवति दृश्यते ।' इति ।

सस्नेहमङ्कमधिरोप्य निसर्गरम्यां
त्वामीषदुन्मिषदुरोजभराभिरामाम् ।
आलिङ्ग्य गाढमधरं मधुरं त्वदीय-
मास्वादयन्नहमनैषमहानि तानि ॥ ९६ ॥

किं ब्रवीषि—'अधरास्वादः कंचिदधिकः परिजयहेतुरुपन्यस्तः किमेतावता ।' इति ।

प्रसरसि किं सुगात्रि प्रथमऋतुस्नानमङ्गला भवती ।
प्रेम्णा मयोपभुक्ता प्रथमरसावेशदुर्ललिता ॥ ९७ ॥

किं ब्रवीषि—'कादाचित्केन केनचित्कर्मणा किं नाम भवतः कलत्रमस्ति ।' इति । परां कोटिमापन्नः कोपः । भवतु । एवमपनेष्यामि । (इति पादयोर्निपत्य ।)

असावस्मि प्रेयान्परिचरितुमग्रे चरणयो-
रपाङ्गव्यापारावसरमभिकाङ्क्षन्नवहितः ।

किमप्यन्तः कृत्वा किमिति दयिते कुप्यसि मुधा
वद स्तोकं दासे मयि विदितमागः कियदपि ॥ ५८ ॥

सप्रसादं किं ब्रवीषि—'आ यौवनारम्भादावयोरन्योन्यमनन्यसाधारणः प्रणयः ।' इति । प्रसिद्धमेतत् । मध्ये च किंचित्कालं केनापि दैवदुर्विपाकेन तथा नाम समापतितम् । भवतु । किं गतसंकथया । अद्यप्रभृत्यात्मनो भृत्यजनेष्वसावपि गणनीया भवता ।' इति । किमेतदपि प्रार्थनीयम् ।

सुरतान्तदुर्बलाङ्गीं सुमुखि त्वामुरसि सरसमाधाय ।
कुचकलशपीड्यमानः करोमि किं वृक्षधः शयनम् ॥ ५९ ॥

कान्ते, नितान्तं परिश्रान्ता भवती क्षणं विश्राम्यतु ।' (इति परिक्रम्यावलोक्य च । सहर्षम् ।)

असौ पटीयानधिपो विटानामारब्धकिंचित्कलहः कुतश्चित् ।
समुन्नतोरोजभरोपनीतं सव्यानमाकर्षति सारसाक्ष्याः ॥ ६० ॥

प्रक्ष्यामि तावदेनम् । (इत्युपसृत्य ।) अये विटशेखर, किंनिमित्तस्ते कलहः सारसाक्ष्याः । किं ब्रवीषि—'मणिगुप्तकाख्यविहारे पराजिता खल्वेषा ।' इति । कीदृशोऽयं विहारः । कीदृशश्च तत्र जयः पराजयो वा । किं ब्रवीषि—'मत्तकाशिनीपयोधराकारशालितया परिकल्पितेषु पङ्क्तिभूतेषु सैकतराशिषु कुत्रचित्तद्विहारप्रवृत्तेन नरेण क्वचिद्गोपितो मणिर्निमीलिताक्षेण तदन्येन येन समुद्ध्रीयते तस्य जयो न चेत्पराजय इत्येवं संप्रदायो मणिगुप्तकविहारस्य । हन्त, अपूर्वोऽयं विहारः । किं ब्रवीषि—'ईदृशस्य विहारस्य प्रक्रमावसर एव तावदावयोरस्ति पणक्लृप्तिः ।' इति । सा कीदृशी । किं ब्रवीषि—'अहं चेत्पराजितो मासमेकं प्रत्यहं तव शतनिष्कं वितीर्य परिचरेयम् । भवती चेत्पराजिता मासमात्रं मम कलत्रभावमालम्बताम् ।' इति । इयं च पराजिता मया च त्रिचतुराणि दिनानि कलत्रनिर्विशेषमुपभुक्ता । संप्रति पुनरन्यथा प्रतिपद्यते । तस्मादयमारम्भः । तदेतद्विचार्यमत्रभवता ।' इति । सारसाक्षि, किं ब्रवीषि—'आवयोरस्ति कश्चिदन्यः समयबन्धः पणबन्धे । तस्मिन्मासे यदि प्रमादात्प्रमदान्तरेण प्रसज्येत संगमस्तदारभ्य लुप्येत कलत्रभाव इति । अयं च ह्यो निशीथे

मम कनीयस्या मुक्तावल्या संगतः ।' इति । किमत्र नियामकम् । कथं चेदमुपपद्यते । किं ब्रवीषि—'केनापि निमित्तेन विलम्बितगतिरहमेवास्य शयनागारगतस्य कर्पूरवीटिकां वितरेति मुक्तावलीं विसृष्टवती । सा त्वनेन बलात्कृत्योपभुक्ता कृच्छ्रादागत्य मां प्रत्याह यथावृत्तमस्य वृत्तान्तम् ।' इति । विट, किं ब्रवीषि—'सप्रणिपातं भूयो भूयः प्रार्थितवत्यपि सा तरुणी प्राज्ञेन मया समयबन्धमनुस्मृत्य परित्यक्ता किल । अतः स्वाभिमतालाभपरितप्तास्याः पुरः किमपि प्रलपितवती ।' इति । सारसाक्षि, किं ब्रवीषि—'अस्तु नामैवं प्रलापः । निदर्शनं तु कथमन्यथयितव्यम् ।

तस्याः प्रत्यागमनसमयग्लानिरङ्गेषु दृष्टा
दृष्टान्येवं दशनवसने किंच दन्तक्षतानि ।
आस्तामेतन्निखिलमधुना पश्यतेन्दीवराक्ष्याः
प्रत्यक्षं वः कुचकलशयोर्भान्ति रेखा नखानाम् ॥ ११ ॥

विट, किं ब्रवीषि—

'क्रीडासद्मनि हंसतूलशयने निद्रालसोऽहं स्थितः
सा तत्रावसरे समेत्य रभसादुत्सङ्गमध्यास्त मे ।
वीटीं तद्वदने मया वितरता किंचिन्निपीड्याधरं
वक्षोजे निहितः करः किमियता कामः समाराधितः ॥ १२ ॥

सारसाक्षि, किं ब्रवीषि—'अनङ्गशेखर, श्रूयते किमस्य वचनवैखरी । किमिदानीमधरोत्तरभावापन्न एव हस्तग्राहं न गृहीत इत्यस्याभिमानः ।' इति । विट, प्रायस्त्वय्येव परिणमत्यपराधः । किं ब्रवीषि—'किमुच्यते त्वय्यपराध इति । मयि का तावदपराधलवस्यापि प्रसक्तिः । मुक्तावली परमपराध्यति या किल मम ज्यायसी स्वयं पुष्पिणीति स्वस्या आदेशतया मामिह प्राहिणोदित्यभिधाय छद्मना केवलमाक्रीडितवती ।' इति । साधु रचितः सारसाक्ष्याः शिरसि कुञ्चितपञ्चाङ्गुलिप्रयोगो वयस्येन । सारसाक्षि, भवत्यैव प्रथममनुचितमाचरितमस्य निकटे वधूटीं प्रेषयन्त्या । तावदेनं यथापूर्वं कलत्रभावेनानुवर्तस्व ।' इति । (कतिचित्पदानि गत्वा विभाव्य च ।)

कस्याश्चिदायताक्ष्याः काचित्पिदधाति कामिनी नयने ।
अन्यास्ततः समन्तादालयकोणेषु लिप्यन्ते ॥ ६३ ॥

अयं किल चक्षुरपिधानं नाम विहारः । (विमृश्य ।) साक्षिण्या सुमध्ययानया पिहिताक्षी काञ्चनमाला । (पुनर्निरूप्य सविस्मयम् ।)

नयने पिधातुमस्या नालं विस्तीर्णपाणियुगलीति ।
कुचसिचयप्रान्तेन स्थगयति वदनारविन्दमेणाक्ष्याः ॥ ६४ ॥

कथमेषा काञ्चनमाला मुक्तचक्षुरपिधाना इतस्ततो विलीनाः सखीरन्वेषयन्ती करलग्नां कलभगमनामानयति । (उपसृत्य ।) काञ्चनमाले, तव हस्ते कथं लग्ना कलभगमना । किं ब्रवीषि—'किमत्र चित्रं नाम ।

यत्रासीदियमङ्गना सतिमिरे गेहे निलीना सती
तत्रापि सितचन्द्रिका पिशुनयत्यङ्गप्रभाप्याहताम् ।
भूयानेष पदे पदे कुचपरीणाहो निरुन्धे गतिं
तस्याः संप्रति कस्य वा करतले गात्रं न लग्नं भवेत्' ॥ ६५ ॥

इति । (सश्लाघम् ।) युज्यते युज्यते ।

अस्या विशृङ्खलपयोधरजृम्भणेन
मध्यं प्रतिक्षणविशङ्कितभङ्गमास्ते ।
लावण्यनिर्झरतरङ्गनिमग्नमङ्गं
हासप्ररोहभरिता हरितां विभागाः ॥ ६६ ॥

कलभगमने, न खल्वीदृशे विहारे भवादृशीनामधिकारः । तस्मादितोमुखं मुखं मनागपाङ्क्षय । तावदहमेव प्रतिनिधीभूय त्वदीयं कृत्यं निर्वर्तयिष्यामि । काञ्चनमाले,

लग्नः स्यां यदि योषितामधिगमे तस्मिन्विधेये मया
सुप्रापः कुचकुम्भयोर्दृढपरीरम्भो हि संभाव्यते ।
लीनः स्यां यदि वा तदापि सुदृशा कार्ये ममालम्भने
लभ्येतैव घनस्तनस्तबकयोरव्याजमालिङ्गनम् ॥ ६७ ॥

किं ब्रवीषि—'किमद्य कलहंस इव चेष्टितुमध्यवसितोऽसि ।' इति । किं चेष्टितं कलहंसेन । किं ब्रवीषि—

'हस्ते शश्वल्लगति सुदृशामङ्गसंस्पर्शलाभा-
ल्लग्नो लग्नः स्मरपरवशास्ताश्च गृह्णाति भूयः ।
सोऽयं धूर्तो विजनभवने लीयमानां मृगाक्षीं
लब्ध्वा सद्यः सुरतरभसव्याकुलाङ्गीमकार्षीत् ॥ ६८ ॥'

इति । हन्त, कथमनङ्गशेखरेऽप्यनाश्वासो वेश्याजनस्य । मुग्धे काञ्चनमाले, किं न जानासि ।

अहरहरुपहारमादधाना रहसि ममावसरं प्रतीक्षमाणाः ।
अहमहमिकया समीहमाना हरिणदृशः कति नाम नोपभुक्ताः ॥ ६९ ॥

किं ब्रवीषि—'आपणमापणमध्यास्ते लोकैः । गच्छ गच्छ ।' इति । (सरोषं परिक्रम्यावलोक्य च । सकौतुकोल्लासम् ।) कथमम्बरकरण्डकाख्यविभ्रमप्रवृत्तीनां मत्तकाशिनीनामिह समवायः समुल्लसति । अत्र काचित्

एकं करण्डकमुदस्यति दक्षिणेन
वामेन किंचिदितरत्करपल्लवेन ।
व्यत्यासतो निपतिते करयोरुभे ते
पर्यायतः पुनरुदस्यति पक्ष्मलाक्षी ॥ ७० ॥

(पुनर्निरूप्य ।)

एषा रत्नकरण्डयुग्ममुपरि प्रक्षिप्य दोर्लाघवा-
देकेनैव करेण तन्निपतितं गृह्णात्युदस्यत्यपि ।
अन्येनापि करेण तावदनया रीत्यैव शातोदरी
संगृह्णाति समुत्क्षिपत्यपि मणिप्रायं करण्डद्वयम् ॥ ७१ ॥

(सविमर्शम् ।) इयं सा कलकण्ठी । उपसरामि तावदेनाम् । (इत्युपसृत्य ।) अये पतितसंग्रहप्रवृत्ते, स्वस्ति भवत्यै । किं ब्रवीषि—'न खल्वद्यतनी ह्यस्तनी वा मे पतितसंग्रहप्रवृत्तिः । किं तु यदा त्वयि निरङ्कुशो निहितः स्नेहानुबन्धस्तदानींतन्येव ।' इति ।

आलोलकङ्कणझणज्झणनादभव्य-
सव्यापसव्यकरकारितताण्डवानि ।

चत्वार्यमूनि मणिखण्डकरण्डकानि
कुर्वन्ति हन्त हृदि मे कमपि प्रहर्षम् ॥ ७२ ॥

तदप्यस्थाने कुतो महान्तमायासमात्मनः संपादयसीत्यमर्षेण तथा भणामि । किं ब्रवीषि—'प्रकृत्या मयि पक्षपाती नाम भवान् ।' इति । कलकण्ठि, अस्ति किंचिदस्य जनस्य विज्ञापनीयम् । अर्धक्षणमवसरः प्रदातव्यः । सबहुमानं विहारमुपसंहृत्यावहिता किं ब्रवीषि—'कीदृशी विज्ञप्तिरत्रभवतः ।' इति ।

उत्सङ्गे भवतीं निधाय सरसं संलापमभ्यस्य च
प्रेम्णा ते मुखवीटिकाविनिमयव्याजाद्गृहीत्वाधरम् ।
पाणिभ्यामपि ते पयोधरभरामर्शं विधाय स्वयं
कामप्यद्य कृतिं कयापि विधया कर्तुं मनः काङ्क्षति ॥ ७३ ॥

किं ब्रवीषि—'किमेतदपि दुर्लभं नाम । आत्मीयं खलु कलत्रमत्रभवतः कलकण्ठी ।' इति । हन्त । अन्यदनेन प्रष्टव्यमुपस्थापितमुत्तरेण । कलकण्ठि, कस्य त्वमद्य कलत्रमसि । (विचिन्त्य ।) आः, स्मृतम् । मम पुरः पुरा वितीर्णं खलु वसन्तकेन वत्सरस्य कलत्रपत्रम् । सनिर्वेदं किं ब्रवीषि—'किं वक्ष्ये तन्महाभारतम् ।' इति । किं पत्रलिखितप्रकारानुसारेण न चालितो विधिर्जाल्मेन । किं ब्रवीषि—'किं सर्वोऽप्यनङ्गशेखरः ।

मासे मासे वसनयुगलं मादृशां श्लाघनीयं
पक्षे पक्षे परमभिनवा कञ्चुली रत्नगर्भा ।
प्रातः प्रातः परिमलमुचो वीटिका गन्धमाल्ये
नक्तं नक्तं नवमपि पयो देयमित्यस्ति पत्रे ॥ ७४ ॥

अयं तु पारदारिकः

दत्ते किंचिद्वसनमसमं मादृशीनां वधूनां
दत्ते कांचित्प्रशिथिलमणीं कञ्चुलीं मे पुराणीम् ।
पक्षस्य द्विर्दिशति विरसा वीटिका नेतरे द्वे
प्रायो नक्तं वितरति पयः पण्डितो वञ्चनायाम् ॥ ७५ ॥

न केवलं दातव्यं न दत्तम्, प्रत्युत सर्वमप्यपहर्तुमारब्धम् ।' इति । कथय मे कथमेतत् । किं ब्रवीषि—'स तावदतिस्नेहाभिनयेन त्रिचतुराणि वासराणि प्रत्यहमन्यमन्यमुपहारमुपाहरत् । मया तु स्त्रीस्वभावसुलभेनाविवेकेन तदीयं प्रेम परमार्थमेव मत्वा विहितो महान्विस्रम्भः । ततश्च क्वचिद्रजन्यां चिरं तेन समं विहृत्य नितान्तं परिश्रान्तिवशेन गाढमुन्निद्रया परवत्यां मयि सर्वाण्यपि भूषणान्यवमुच्य मुक्ताहारमेकमादातुमुरसि करन्यासमरचयत् । तेन प्रतिलब्धबोधया मया तत्क्षणमेव हस्तग्राहं गृहीतः।' इति । हा धिक् । अयं वराकः क्व ते संगतो भुजङ्ग इव चन्दनलतायाः । किं ब्रवीषि—'एतदुपश्रुत्य दुर्मर्षणया जनन्या जीर्णशूर्पेण संताड्य निर्वासितः । तदा प्रभृति प्रत्यहमभ्यागतान्भवादृशो यूनः सभाजयन्ती सुखेन प्रतिवसामि ।' इति । मदीयाभिराभिराशीर्भिः शरदः शतमित्थमम्लानयौवना सुखमास्व । (इति कतिचित्पदानि गत्वा निरूप्य च सहर्षम् ।) अत्र खल्वारचन्ति कन्दुकविहारं तरुण्यः । असाविह वसन्तकलिका

वसनमुरसि स्रस्तं स्रस्तं निजे दधती पदे
विषमितमपि स्थाने स्थाने विभूषणमन्ततः ।
किमपि किमपि प्रोद्गायन्ती करेण पुनः पुनः
प्रवहति जवाद्भ्रामं भ्रामं वधूर्मणिकन्दुकम् ॥ ७६ ॥

(उपसृत्य ।)

मणिकन्दुकताडनोत्सुके मदनप्राणनमन्त्रफक्किके ।
कुचकन्दुकमर्दनस्य ते प्रतिजानीष्व पणः कियान्मतः ॥ ७७ ॥

किं ब्रवीषि—'अहो, कियद्वैदग्ध्यम् । साधु साधु । यत्र क्रीतं तत्रैव विक्रीयते ।' इति । वसन्तकलिके, कथमेष पादमूलपतितोऽपि निर्दयमभिहन्यते । अथवा प्रकृत्यैव यं कंचिदपि हस्तलग्नमधरीकुर्वन्ति वाराङ्गनाः ।

वाचालकङ्कणगणेन भुजेन कण्ठे
मामन्तिकस्थमभिगृह्य निपात्य मञ्चे ।
आक्रम्य वक्षसि निपीड्य पयोधराभ्या-
माक्रीडितं खलु तलोदरि यद्भवत्या ॥ ७८ ॥

(पुनर्निरूप्य ।)

परिभ्रश्यद्वक्षोवसनसुखलक्ष्यस्तनतटं
समुद्भ्राम्यत्पादाम्बरललितदृश्योरुयुगलम् ।
उदस्तव्यत्यस्ताभरणसुविभाव्याङ्करुचि
भ्रमन्त्येषा यूनां भ्रमयति मनांसि प्रतिपदम् ॥ ७९ ॥

मानिनि, मा कुरु साहसमीदृशम् । अपायो भविष्यति वलग्नस्य । कथमेषा विरम्य निमीलिताक्षी निःश्वसिति ।

कुवलयनयनायाः क्लान्तिनिष्पीडिताङ्ग्या-
श्चलति कुचदुकूलं चारु निःश्वासवाते ।
श्रमजलकणिकानां श्रेणिरस्यारविन्दे
वहति च मकरन्दस्यन्दसंदोहलक्ष्मीम् ॥ ८० ॥

अयमवसरः सम्यगनया संलपितुम् ।

श्रान्तासि नाम सुमुखि श्रमविश्रमाय
किं वीजयामि सहसा वसनाञ्चलेन ।
अन्तर्निवेशमथवा सपदि प्रविश्य
पानीयमेव मधुरं किमुपाहरामि ॥ ८१ ॥

किं ब्रवीषि—'अलमायासेन । मधुरतरेण वचनामृतेनैव भवतो निःशेषमपनीतोऽमदीयश्रमः ।' इति ।

स्मरसि किमसिताक्षि प्रक्षिपन्ती करेण
प्रसवसरनिबद्धं कन्दुकं प्राङ्ममाङ्गे ।
पुनरपि मम हस्तप्रेरितेनैव तेन
त्वमपि सरसमङ्गे हन्त संताडितासि ॥ ८२ ॥

सव्रीडस्मितं किं ब्रवीषि—'जानामि तदुत्तरप्रवृत्तचरित्रविशेषानुसंधानार्थमित्थमात्थ ।' इति । हन्त, कथमद्यापि न विस्मरसि वीरायितम् । किं ब्रवीषि—'अहं तु न विस्मरामि । भवता पुनरद्य मदीयभाग्यविपर्ययेण प्रागिव भूयानिह परिचयो न विधीयते ।' इति ।

दासे मयि प्रेयसि दारुणानि वृथा प्रयुङ्क्षे वचनाक्षराणि ।
करोमि वासं तव संनिधाने कटाक्षमात्रावसरप्रतीक्षः ॥ ८३ ॥

आस्व । साधयामि । (इति पदान्तरे स्थित्वा निरूप्य च सानन्दम् ।)

अन्योन्यबद्धपरिहासपरम्पराभि-
राभिर्वधूभिरभितः परिवार्यमाणा ।
मञ्जुक्वणत्कनककङ्कणमङ्गणेऽस्मि-
न्नक्षान्विनिक्षिपति संप्रति पक्ष्मलाक्षी ॥ ८४ ॥

(उपसृत्य ।) अयि पक्ष्मलाक्षि,

करेण पङ्केरुहसोदरेण प्रक्षेप्तुमक्षान्प्रतिगृह्णती त्वम् ।
मदीयमप्यक्षपदाविशेषाद्गृह्णासि किं लोचनमानताङ्गि ॥ ८५ ॥

किं ब्रवीषि—'अनङ्गशेखर, एह्येहि । किमागतासि । मया पुनरक्षक्रीडाक्षिप्तचित्तवृत्त्या न ज्ञातं भवदागमनम् । अयं महानपराधः ।' इति । कथमेषा हस्ते गृहीत्वा मामर्धासने निवेशयति । (परस्परसंस्पर्शमभिनयन् ।)

स्पर्शेन ते परमसुन्दरि दुर्निरूपं
निर्वाणमुन्मिषति मे दुरवापमन्यैः ।
पश्य प्रिये भजति संप्रति मे शरीर-
मुन्मस्तकस्तबकनिर्भरनीपरीतिम् ॥ ८६ ॥

(क्षणमिव स्थित्वा विभाव्य च ।) कथमेषा कुम्भस्तनी मन्दारकेण सह किमपि व्यवहरन्ती मदन्तिकमुपसर्पति । कुम्भस्तनि, किं ब्रवीषि—'व्यवहारः कश्चिदापतितो भवता परिच्छेत्तव्यः ।' इति । भवत्वेवम् । किं ब्रवीषि—'अद्य षण्मासानस्याहमस्मि प्रणयिनी ।' इति । जानामि तावत् । येन केनापि पराजितेन जनेन जितवतोऽधः शेतव्यम्, अधरश्च तस्मै दातव्यः, इति तामरसाक्षीसाक्षिणीकं संकल्पितपणबन्धयोरावयोरासीदक्षक्रीडायां प्रवृत्तिः । तत्र तवैषा संप्रेक्ष्या दिष्ट्या जितवती । पराजितः स्वयं संकल्पितमर्थं न संमन्यते । तदिदं न्यायतो निर्णेतव्यं भवता ।' इति । मन्दारक, किमेषैव परिपाटी । किं ब्रवीषि—'अहं तावदेतावदेव जानामि ।

अस्या मञ्जुक्वणितवलयं शश्वदक्षान्क्षिपन्त्याः
स्तोकाल्लक्ष्यस्तनकलशयोः सर्वदा दत्तदृष्टिः।
चाटुप्रायैः सहजमधुरैः प्रेर्यमाणो वचोभिः
प्रीत्यै भूयः करनिपतितान्प्राक्षिपं तावदक्षान्॥ ८७॥

अनन्तरं चानया जितं मया जितं वा को वेद।' इति। कः संदेहः। इत्थं व्यवहारमादधानेन त्वयैव जितं नाम। कुम्भस्तनि, किं ब्रवीषि—'किमद्य साक्षिण्यप्यस्तंगता।' इति। मन्दारक, किं ब्रवीषि—'तामरसाक्ष्युत्कोचदानेन किंकरीकृता साक्षिणीभावमात्मनि समारोपितवती। कथमस्या वचसि विश्वासो भविष्यति।' इति। (अपवार्य।) मन्दारक, कस्तवाध्यवसायः। किं ब्रवीषि—

'आरोप्य मञ्चमपनीय च नीविबन्धमारुह्य पीवरपयोधरभारमस्याः।
आस्वाद्य चाधरसुधारसमायताक्ष्या
रन्तुं यथेच्छमभिवाञ्छति मानसं मे॥ ८८॥

तन्मदीयमनोरथानुरोधेन विधातव्यम्।' इति। कुम्भस्तनि, इत्थं ब्रूते किल मन्दारकः। तदुपरि किमभिप्रेयते भवत्या। किं ब्रवीषि—'भवदुक्तिराकर्ण्यते।' इति। (कुम्भस्तनीं हस्ते गृहीत्वा।)

शेष्वाधस्तादथ वितर वा तस्य बिम्बाधरं त्वं
शेतेऽधस्तादधरमथवा सोऽपि दत्ते भवत्यै।
अस्मिन्नर्थे समरसतया नास्ति कश्चिद्विशेषो
भूयो भूयः कलहविषया ब्रूहि किं वा फलं वा॥ ८९॥

(उत्थानमभिनयन्नूर्ध्वमवलोक्य।) हन्त, मण्डयति भगवान्मध्यमम्बरस्य महसां पतिः। अद्य हि

अन्तस्तोयममी विशन्ति शफराः शीतं सरःशैवलं
भृङ्गाः पङ्करुहान्धयन्ति च मधून्यावीक्ष्य पक्षानिलैः।

सालानां रभसालवालवलयानध्यासते बर्हिणः
क्रीडन्ति क्रमविक्लवाः कटुरवा गोपानसीपालिषु ॥ ९० ॥

(परिक्रम्यावलोक्य च ।)

अग्रे कयापि मुखनीतमणीकलाची
पश्चात्कयापि सुदृशा करदत्तवीटी ।
पार्श्वद्वये व्यजनमण्डलवीज्यमाना
डोलाविहारमरविन्दमुखी करोति ॥ ९१ ॥

इमामुग्रातपवेलामनया संलपन्नपनेष्यामि तावत् । (इत्युपसृत्य ।) कथमेषा मामालक्ष्य प्रत्यवरोहति । अरविन्दमुखि, तूष्णीमास्स्व तूष्णीमास्स्व । किमुत्थानप्रयासेन ।

तव सुवदने गुञ्जन्मञ्जीर·······पदद्वयं
कलकलमिलत्काञ्चीदामाञ्चिता जघनस्थली ।
हिमरुचिरुचिस्निग्धं मुग्धस्मितं मधुरं वचः
स्वयमुपचरत्यस्थाने तत्तलोदरि सांप्रतम् ॥ ९२ ॥

किं ब्रवीषि—'प्रियदर्शन, सत्वरमधिरुह्य सनाथीकुरु डोलाम् ।' इति । (तथा कृत्वा ।) अये अरविन्दमुखि, मध्याह्ने गृहानागता मद्विधा मनीषिणो यथाभिमतमातिथ्येनोपस्थानमर्हन्ति ।

एष प्रियातिथिरुपाहर मेऽङ्कपीठं
पाणौ निवेशय पयोधरनालिकेरम् ।
वीटीं प्रदेहि वदने यदनेन कान्ते
मुञ्चामि येन मदनातपतापखेदम् ॥ ९३ ॥

किं ब्रवीषि—'मध्यरात्रः किल कालो मकरध्वजविधिचोदितस्य भवद्विधातिथ्युपराधनस्य ।' इति । मा मैवम् ।

रन्तुं प्रतीक्षणीया रजनी किल वेद किंकरैरेव ।
स्वच्छन्दचारिणां पुनरहरहराहुः स्मृतं सुरतम् ॥ ९४ ॥

किं ब्रवीषि—'कामपि गीतिक्रियामत्रभवतः कर्णपथमवतारयन्ती कृतकृत्यमात्मानं कर्तुमभिलषामि ।' इति । (सहर्षम् ।)

कुन्तक्षतेन्दुमण्डलरन्ध्रस्रवदमृतधारया गीत्या।
चिरतरमुपोषितं स श्रवणद्वयमद्य पारणां लभताम्॥ ९५॥

कथमेषा भ्रूसंज्ञाविज्ञातनियोगया परिचारिकया सरभसमुपनीतां वीणां गृह्णाति।

कुवलयविलोचने त्वं कुरुषे किल पाणिपल्लवे वीणाम्।
अहमपि करे करोमि किमधुना कुचतालमादरेण तव॥ ९६॥

कथमेषा वीणां वादयन्ती सारिगमपधनीति सप्तस्वरैरुच्चावचारोहावरोहमनोहरं गायति। (मुहूर्तमाकर्ण्य। सबहुमानम्।) अलमरविन्दमुखि, निर्वृतं मे हृदयम्। समाप्यतां नाम संगीतकम्। मा भूदस्थाने भूषणरत्नानां द्रवीभावेन तिरोभावः।

तव तन्वङ्गि संगीते द्रवन्ति हि शिला अपि।
निःसारो माक्षिकासारो नीरसश्च सुधारसः॥ ९७॥

हन्त, अमृतवर्षणाभिषेकेणैव शिशिरीकृतं मम शरीरम्। अनेन प्रसन्नो भवत्याः प्रसवायुधो युधि निजायां विजयं विधास्यति। (अवतीर्य कतिचित्पदानि गत्वा। निरूप्य। सानन्दम्।)

सव्येन दर्शितैकस्तनभारमुरस्तिरोदधती।
व्यावृत्य मां कटाक्षैर्व्यथयति भुवनैकसुन्दरी केयम्॥ ९८॥

एषा खलु कम्बुकण्ठी रत्नचूडेन सह विवदमाना कटाक्षेण मामाह्वयति। (उपसृत्य।) कम्बुकण्ठि, किं ब्रवीषि—'ज्ञायते युग्मायुग्मदर्शनं नाम विहारः। ज्ञात एव। मुक्ताभिः परिपूरितां मुष्टिं प्रदर्श्यात्र मुष्टौ युग्ममयुग्मं वा मौक्तिकमिति केनचिदनुयुक्तः प्रतिद्वन्द्वी युग्ममिति वायुग्ममिति वा किंचित्प्रतिजानीते। अनन्तरं मौक्तिकानां विभञ्जने परिशिष्यमाणं प्रतिज्ञानुसारेण संपद्यते चेत्प्रतिज्ञाकृतो जयो न चेदपजय इति खलु युग्मायुग्मदर्शनाख्यविभ्रमलक्षणम्। अत्र विभ्रमे प्रसक्तो विवादः।' इति। किमस्ति पणव्यत्यासः। रत्नचूड, किं ब्रवीषि—'मम पराजये तत्कैंकर्यम्। जये च तत्स्वामिभावः।' इति पणः। नात्र कश्चिद्व्यत्यासः।

रत्नचूड, किं ब्रवीषि—'मुक्ताफलगणनायां येन जनेनापह्नवः क्रियते स निर्जितः । इति संकेतः । अनया चापह्नवः कृतः । तथाहि—

मुक्ताफलपरिपूर्णौ मुष्टिमियं नः प्रदर्श्य मुग्धाक्षी ।
युग्ममयुग्मं वा मे मुष्टिगतं मौक्तिकं वदेत्याह ॥ ९९ ॥

अहं तु युग्ममिति प्रतिज्ञाय,

मुक्ताफलानि करनिष्पतितानि युग्मं
युग्मं क्रमेण पुरतो विभजामि यावत् ।
अत्रान्तरे सितकिशोरमरीचिकाभि-
रेकीकृतानि सकलान्यपि साऽसाक्ष्या ॥ १०० ॥'

इति । कम्बुकण्ठ, किं ब्रवीषि—'मदीयेऽपि मन्दहासे मूलमस्यैव जल्पितम् ।' इति । एष किमाह । किं ब्रवीषि—

'जेष्यामि त्वामिह विहरणे पश्य मे चातुरीं त्वं
जित्वा च त्वत्कुचमपि नखैः पीडयिष्यामि तावत् ।
काले किंचिन्मदभिलषितं कृत्यमारभ्य कुर्व-
न्रुद्धो रुद्धस्त्वदधरमधु स्वादु पास्यामि तावत् ॥ १०१ ॥'

इति । रत्नचूड, किं ब्रवीषि—'इदमप्युत्तरमेतस्या वचसः । एषा खल्वेवमाह—

जित्वा भवन्तमधुना विधिनामुनैव
वक्षोजभारवहने विनियोजयिष्ये ।
क्रीडासु कास्वपि समुन्मिषति श्रमे वा
संवाहने चरणयोः सहसा नियोक्ष्ये ॥ १०२ ॥'

इति । कम्बुकण्ठ, किं ब्रवीषि—'अस्य निष्कारणं कुचभरे कर-विन्यासेन परवशतया मम तथा निर्गतं वचनम् ।' इति । रत्नचूड, किमेतत्सत्यमेव । किं ब्रवीषि—

'मुक्ताफलं किरन्त्या मुग्धदृशः स्तनभरेण मदपाङ्गः ।
ग्रस्तस्तामुपदातुं न्यस्तो हस्तो मया तत्र ॥ १०३ ॥'

इति । अयं दुरुच्छेदो विवादः । (अन्यतो विलोक्य ।)

द्वैधीभूय स्थितमुभयतो यौवतं तत्र कश्चि-

त्प्रत्यस्यन्निप्रसवरचितं कन्दुकं स्वं युवानः ।

आयान्तं तं वियति समुपादीयता एव नम्रा-

स्तानारुह्य स्तनभरनताः सुभ्रुवो विश्रमन्ति ॥ १०४ ॥

कथमेषा कृशोदरी पलायमानं मकरन्दकं हस्ते गृहीत्वा निर्भर्त्सयति । (उपसृत्य ।) अये कृशोदरि, किमेतत् । किं ब्रवीषि—'अयं खलु गजपतिकुसुमकन्दुको नाम विहारः । अत्र च यूनां युवतीनां च समाजे परस्परप्रतिस्पर्धितया व्यवस्थिते यत्समाजानुप्रविष्टस्य कस्यचिज्जनस्य हस्ते कन्दुको लगति तदनुप्रविष्टा एव त्रिचतुरः प्रतिस्पर्धिसमाजान्तर्गतांस्त्रिचतुरानश्वानिवाधिरुह्य प्रतिवसन्तीति मर्यादा । संप्रति मदीययानया गृहीतः कन्दुकः । अयं तु मम प्रतिद्वन्द्वी मामधिरूढां वहन्नन्तराले पातयित्वा पलायितुमुपक्रमते ।' इति । मकरन्दकसंज्ञस्य भवतो विप्रतिषिद्धा प्रवृत्तिरेषा ।

यस्या दर्शनमेव कामपि मुदं दुग्धे विदग्धे जने

संलापः सकृदेव यत्र विहितः स्वर्गं प्रसूते भुवि ।

कैवल्यं विलसीकरोति किल यत्संस्पर्शजा निर्वृति-

स्तां वोढुं सुदतीं तवाद्य न कियत्तप्तव्यमुग्रं तपः ॥ १०५ ॥

किं ब्रवीषि—'मार्गे गच्छतो मन्दिरनिर्माणं सुकरम् । बिभ्रतः खलु भारः ।' इति । कथमेषा तन्वी कृशोदरी भारायते भवतः । किं ब्रवीषि—

'बाढं तन्वी भवति सुदती बाढमेषाणुमध्या

बाढं लघ्वी पदनलिनयोर्बाढमन्यत्र मृद्वी ।

किं त्वेतस्याः शिखरिपुलिनैश्वर्यपर्याप्तिसीम्नोः

स्फारो भारः स्तनजघनयोः सर्वथा दुर्वहो मे ॥ १०६ ॥'

इति । तर्हि एवंभूतोऽपि सन्नत्र विहारे कथमनुप्रविष्टः । किं ब्रवीषि—'अस्या नाहं प्रतिद्वन्द्वी किं तु चारुहासिन्याः । सा किल

तालाकारस्तनभरवती ताम्यमानावलग्ना

बाला किंचिद्विपुलजघना बालरोमावली च ।

तामुद्वोढुं तरलनयनामुत्सहे मां च सापि
कैषा योषा घनकुचभरा काहमाद्यो मृदूनाम् ॥ १०७ ॥'

इति । तर्ह्येनामित्थं ब्रूयाम् ।

कृशोदरि कृपा न किं तव बत प्रमुग्धासि किं
युवानमतिकोमलं किमधिरोहसि प्रेयसि ।
तवोन्नतघनस्तनं गुरुनितम्बबिम्बं वपु-
र्न वोढुमयमर्हति स्वयममुं त्यज प्रार्थये ॥ १०८ ॥

किं ब्रवीषि—'आलयघण्टामणिनाशेऽप्यर्चकस्य का हानिः ।' इति । ननु तवापि न हानिः । अस्य स्थाने मल्वीवर्धनमाकल्पयिष्यामि । किं ब्रवीषि—'किमिदानीमापणनालिकेरमध्वविनायकस्य प्रहरसि । तवानुग्रहश्चेदस्मिंस्त्वमुद्वह । तावदमुं त्यजामि ।' इति ।

उद्वाहः खलु नारीणामुदारो वेदचोदितः ।
अनुतिष्ठामि चेदेनमभिवन्द्योऽस्मि सर्वतः ॥ १०९ ॥

अये मकरन्दक, चारुहासिन्याः प्रतिद्वन्द्वी किमर्थमेनां वहसि । किं ब्रवीषि—'संप्रति परिवर्तनेन मम प्रतिद्वन्द्वितयेयमापतिता ।' इति । (अपवार्य ।) एषा न मुञ्चति । पलायस्व तावत् । (परिक्रम्यावलोक्य ।)

आलोचनोज्झितपरस्परजल्पिताना-
मश्वादिपद्धतिषु दत्तविलोचनानाम् ।
प्रक्रान्तचक्रहयकुञ्जरसंगराणां
सङ्घश्चकास्ति चतुरङ्गविहारभाजाम् ॥ ११० ॥

कथमेषा मारवल्लरी विदग्धभूषणेन सार्धं विगृह्णती कूकूरुतं करोति (उपसृत्य ।) मारवल्लरि, किमत्याहितम् । किं ब्रवीषि—

'श्लथयति कबराणां भारमभ्यग्रबन्धं
नवमपि कुचभागे पत्त्ररेखं प्रमार्ष्टि ।
अधरमपि गृहीत्वा स्वादयन्नेष रागी
सरशनमपनेतुं चेलमालम्बते च ॥ १११ ॥'

इति। विदग्धभूषण, कथमविनयः क्रियते। किं ब्रवीषि—'को नामाविनयः। चतुरङ्गविभ्रमे निर्जितैषा। ततः संकेतितपणानुसारिणी मम प्रवृत्तिः।' इति। (अवधार्य।) मारवल्लरि,

अनङ्गसंगरे तैस्तैरद्वितीयासि विभ्रमैः।
सा त्वमद्य कथं बाले चतुरङ्गरणे जिता॥ ११२॥

किं ब्रवीषि—'अन्यव्यासक्तचित्तया मया बलप्रचारे न दृष्टिरर्पिता।' इति। जानामि ते मनःप्रणिधानशैथिल्यकारणम्।

कदा मामाक्रम्य स्तनशिखरसीम्नि प्रियतमः
शयानः स्वच्छन्दं रहसि रमयिष्यत्यनलसः।
कदा वा संभोगश्रममनुभविष्याम्यहमिति
व्यवस्यन्ती चित्तं मयि किल विलीनं व्यरचयः॥ ११३॥

कथमेषा व्रीडानम्रेण मुखेन प्रतिब्रूते। मारवल्लरि, कस्ते मनोरथः। किं ब्रवीषि—'जयासिद्ध्या भवितव्यम्।' इति। विदग्धभूषण, भवतो विजये प्रमाणं किंचिदाख्याहि। किं ब्रवीषि—'अस्या मन एव साक्षि।' इति। मूर्ख, तर्हि किमिति गर्वायसे। किं नामासाक्षिको व्यवहारः साधीयान्। तदयमकृतप्रायो विभ्रमः। पुनरन्यः प्रारभ्यताम्। विदग्धभूषण, किं ब्रवीषि—'यदादिशति प्रियवयस्यः।' इति। मारवल्लरि,

स्वप्नेऽपि ते कुचभरे करमर्पयित्वा
सीत्कारमुग्धमधुरं सरसं निपीय।
विस्रस्य नीविनहनं भवतीं प्रसह्य
संनह्य कर्म किमपि स्वयमाचरामि॥ ११४॥

(इति पदान्तरे स्थित्वा विभाव्य च।)

श्मश्रुस्तोकपरिष्कृतवक्त्रः संपन्नयौवनः कोऽयम्।
मारसुकुमारमूर्तिर्मस्तकविन्यस्तपुस्तकः स्फुरति॥ ११५॥

(विमृश्य।) कथमेष कामन्तकः कामाक्षीमहोत्सवसफलीकृतलोचनः काञ्चीपुरीतः प्रतिनिवृत्तः। (उपसृत्य।) सखे कामन्तक, अपि कुशल्यसि।

(परिष्वज्य ।) किं ब्रवीषि—'दिष्ट्या संतीर्णविरहार्णवो भवन्तं पश्यामि ।' इति । हन्त । कया ते विरहः संगमो वा । किं ब्रवीषि—'तत्र कदापि दिवसावसानावसरे पुरसौन्दर्यसंदर्शनाय समन्ततः संचरन्नचञ्चलमल्लिका-क्षपक्षसंधुक्षितमारुतोत्सारितकमलावलीविलीनमदकलालिकलभकाहलीकम-नीयायाः कमलिन्याः कस्याश्चन कच्छमगच्छम् । तस्मिन्नेव समसमयसमु-दितसौदामिनीसमुदायसंपदिव संपादितसत्त्वसंबन्धा पञ्चशरराज्यसौभाग्य-देवतेव परिणताकारा कातराक्षी काचिदेवातरदपाङ्गयोः पदवीमदवीयसीम्।

साकूतस्मितवलितानननाभिरामं
　पश्यन्ती प्रणयविकस्वरैरपाङ्गैः ।
उत्फुल्लोत्पलविपुलायतेक्षणा मे
　सा चेतश्चतुरतरं वधूरमुष्णात् ॥ ११६ ॥

प्रतिनिवृत्तायां ततस्तस्यां प्रमुषितचैतन्यो मुहूर्तमितिकर्तव्यतामूढतया स्तब्ध एव स्थितवानस्मि । अथ परिसर एव सरसः परिदृश्यमानभृङ्गस-ङ्घसंघट्टननिष्पतत्पुष्पकल्पितास्तरणं शरणं प्रपद्य हृद्यमुद्यानं युगमिव निग-मय्य कतिचिदतिचिरायमाणानि वासराणि यावदेवं प्रलपितुं प्रवृत्तोऽस्मि

तीव्रो दाहो वपुषि जडता चक्षुषोरश्रुभूम्ना
　निद्राभङ्गादपचिततया नालमन्यत्र गन्तुम् ।
हा हा कष्टं प्रबलविरहव्याधिना दूषितोऽहं
　किं वा कुर्वे किमु समुचितं कंदमावेदयामि ॥ ११७ ॥

इति, तावदेव संजीवनौषधिरिव संजातजीविका कल्पलतेव कल्पितसंचारा काचन चपलाक्षी मामुपेत्य सादरमप्राक्षीत्—'कस्त्वं परिक्षीणश्चन्द्रमा इव समालक्ष्यसे। कुतश्च तिरश्चामपि दयनीयां दशामापद्यसे । सर्वथा मामव-धार्य विस्रम्भस्य भाजनं निवेदय वेदनीयम्' इति। समनन्तरम् 'अयि निष्का-रणप्रेमशालिनि, यदा पुनरस्मिन्कमलिनीकच्छे कांचन काञ्चनलतामिव तलो-दरीमद्राक्षम्, तदारभ्य ममेयमवस्था। अद्य समस्तोऽपि भारस्त्वयि विन्यस्तः। तदुपरि यथा रोचते कुरु तथा' इत्युक्त्वा विरमति मयि सा पुनरेवमब्रवीत्—

'तरुणराज, तस्या मन्दभाग्याया निदेशेन सर्वतो विचिन्वन्ती किमप्यतिकरुणं वचनमुपश्रुत्य भाग्योदयादिह भवन्तं पश्यामि। सापि त्वद्दर्शनेन सद्यः स्मरशरापातपरिक्षुभितचेतना प्रस्खलितचलितचरणार्पणं प्रसृतमार्गसंसर्गं कृच्छ्रादगारमगात्। आगत्य च

निन्दन्ती निजमण्डनानि सुदती निःश्वस्य निःश्वस्य सा
विन्दन्ती तनुतापमप्रतिकृतिं भूयो वियोगाकुला।
म्लायन्ती नवमल्लिकास्रगिव च न्यस्ता महत्यातपे
ध्यायन्ती हृदये भवन्तमनिशं कान्ता परं ताम्यति॥ ११८॥

तस्मादद्य नक्तं निष्कुटवनमाक्रम्य संजीवय मे प्रियसखीम्' इत्यभिधाय निरगच्छत्। अहमपि निशीथे प्रसृमरतिमिरपूरपरिप्लाविते जगति चम्पकबकुलमल्लीमुखप्रसवपरिमलभरभङ्गुरमरुदङ्कुरमेदुरं मुद्रितमधुकरीझंकारं मुकुलितकलकण्ठकाहलीसंचारं विविधसालजालाभिरामं प्रविश्य गृहारामं परिपालयति मयि सापि सखीजनस्वरविशेषविदितमदागमनवृत्तान्ता निद्राणे प्राणनाथे निर्वाप्य दीपं निःशब्दमुद्घाट्य कवाटं पुरेव तिरोधाय द्वारं पुरोधाय धैर्यम्

विश्रान्तनूपुररवं पथि मन्दमन्दं
विक्षिप्य पादमपदे भयकम्पितोरु।
आलोक्य शश्वदभितो निजबन्धुभीत्या
संकेतमागतवती सहसा मृगाक्षी॥ ११९॥

आगत्य च।

वक्षोजभारदृढपीडितवक्षसं मा-
माभाष्य पुष्यदमृतस्रुतिभिर्वचोभिः।
अस्तंगतात्मपरिभेदविवेकमेक-
मप्राकृतं रतमकारि तया तरुण्या॥ १२०॥'

इति। साधु सखे, साधु। निपुणः खलु भवान्निधुवनविद्यायाम्। किं ब्रवीषि—'कथमन्यथा भाजनं भवामि भवदीयप्रेमसंभारस्य।' इति। किमे-

तच्छिरसि धार्यते पुस्तकमिव । किं ब्रवीषि—'भवति ज्योतिःसिद्धान्त-सारावलीं नाम ।' इति । तर्हि ब्रूहि मे मनोरथम् । गणित्वा किं ब्रवीषि—

'कालालकालिभरया कमलायताक्ष्या
कूलंकषोन्नतकुचावनताङ्गयष्ट्या ।
तारुण्यदुर्ललितया तपनीयकान्त्या
तन्व्या समागमनमेव मनोरथस्ते ॥ १२१ ॥'

इति । (सशिरःकम्पम् । करेण करमास्फाल्य ।) सखे, प्रवीणोऽसि कामतन्त्र इव ज्योतिस्तन्त्रे । कदा पुनर्मनोरथस्य संपत्तिः । किं ब्रवीषि—'अद्य रजन्याम् ।' इति । भवतु । मनोरथसिद्ध्यनन्तरं पारितोषिकं ते वितरिष्यामि । किं ब्रवीषि—'सामान्यतो जानामि केवलं कुत्रापि कामिनीरत्ने विहितो भावानुबन्धो भवतेति । तद्विशिष्य ज्ञातुमभिलषामि ।' इति । सखे, किमस्ति तवापि गोपनीयं नाम ।

अव्याजसुन्दराङ्कमप्राकृतरूपयौवनोन्मेषम् ।
कल्याणवेषमास्ते कनकलता नाम कन्यकारत्नम् ॥ १२२ ॥

किं ब्रवीषि—'कथमदृष्टचरे तस्मिञ्जने भवतः स्नेहानुबन्धः ।' इति ।

पश्यन्ती मां प्रणयपिशुनैर्दीर्घदीर्घैरपाङ्गै-
र्व्याजात्कस्मादपि नवनवं तन्वती मन्दहासम् ।
मध्येमार्गं परिजनवृता मन्दमन्दं प्रयान्ती
संदृष्टा मे सरसिजमुखी संमुखीना कदाचित् ॥ १२३ ॥

किं ब्रवीषि—

'किं ते लब्धः कुवलयदृशा संगमः प्रेमभाजा
संरम्भो वा किमु विरचितः संगमे संनताङ्ग्या ।
किं वाकार्षीः कुचभरपरीरम्भमस्याः कदाचि-
त्संलापं वा सकृदपि तया सानुरागं व्यधाः किम् ॥ १२४ ॥'

इति । न किंचिदेतेषु । किंतु दर्शनमेव केवलमासादितम् ।

कटाक्षवागुराबद्धं विद्धं कामशरैरपि ।
कर्षन्ती निर्दयं चेतो गतैव मम कामिनी ॥ १२५ ॥

किं ब्रवीषि—

'स्थित्वा क्षणं त्वमिह सुन्दरि साधयेति
यान्तीं वधूं परवशेन किमब्रवीस्त्वम् ।
मार्गं तदीयमवरुध्य पुरःस्थितः किं
पश्चाद्गतो नु पदवीमनुसृत्य तस्याः ॥ १२६ ॥'

इति । तत्क्षणमेव तदीक्षणपातमात्रेण मोहितमतिरतिदुरासदमदनानलदह्यमानमानसः शनैर्निजं निवेशं प्राविशम् । तदारभ्य

निन्दन्निन्दुं निखिलनयनानन्दकन्दायमानं
मन्दस्पन्दं मलयमरुतं मल्लिकातूलिकां च ।
चिन्तामन्तश्चिरमुपचितं तापमापद्य चाहं
क्षन्ता हन्त क्षणमपि सखे नास्मि घोरस्मरार्तः ॥ १२७ ॥

किं ब्रवीषि—'अचिरेण भविष्यत्येव युवत्या संगमः ।' इति ।

अङ्गीकरोतु जनमेनमनङ्गलीला-
भङ्गीषु योषिदनुरागवशेन मा वा ।
तन्वी पुरेव पुरतः स्थितिमेकवारं
तन्वीत चेन्मम तदेव विनोदहेतुः ॥ १२८ ॥

कथमत्र संनह्यन्ति स्तम्भननटाः ।

एते नाट्यप्रवीणाः कटिदृढघटितक्षौमकक्ष्याभिरामा
धावन्तो दूरमूरुप्रचुरपरिचलन्निक्वणत्किङ्किणीकम् ।
अध्वन्यर्धे धृतज्यं धनुरिव तनुमावर्ज्य सज्जीकृतानां
वारं वारं वधूनामुदरमभिमृशन्तोऽङ्घ्रिणा लङ्घयन्ते ॥ १२९ ॥

हन्त स्तम्भनटाङ्गनाः कतिचन प्रेयांसमंसस्थले
पादाभ्यामभिहत्य मूर्धनि चिरं तिष्ठन्ति निश्चेष्टितम् ।
उत्प्लुत्याम्बरसीम्नि चक्रमिव च भ्रान्त्वा निपातक्षणे
पद्भ्यामेव पुरेव भूतलमलंकुर्वन्ति नार्योऽपराः ॥ १३० ॥

सखे, पश्येदं योषित्साहसम् ।

पाशावलम्बकलया सहसाधिरुह्य
स्तम्भाग्रमुन्नतमुरोजभरेण खिन्ना ।
तिर्यग्विवर्तिततनुस्तरुणी चिराय
चक्रे परिभ्रमति चम्पकमालिकेव ॥ १३१ ॥

(अन्यतो विलोक्य ।)

उद्यानोद्धतगन्धसिन्धुरनिभावाबद्धयुद्धादरौ
कक्ष्याबद्धकटीतटौ सविकटभ्रूभङ्गभीमाननौ ।
रुष्टौ गाढगृहीतमुष्टियुगलौ मुक्ताट्टहासौ मिथः
पर्यायं चरतोऽत्र मण्डलतया मल्लौ समुल्लासिनौ ॥ १३२ ॥

किं च ।

आस्फोटस्फुटितस्वमस्तकतटीसंघट्टितस्तम्भिता-
वन्योन्यं लघुलङ्घनेन झटिति व्यस्तौ पुनस्ताविमौ ।
भ्राम्यन्तौ भुवि चक्रवच्च सुदृढं संश्लिष्य सद्यःस्थितौ
मुष्टिभ्यामितरेतरं प्रहरतो मल्लौ मुहुर्मांसलौ ॥ १३३ ॥

(पदान्तरे स्थित्वा ।) कथमिह प्रवृत्तमेव चरणायुधयोरायोधनम् । तथा हि ।

किंचिच्छिद्रोपलम्भादभिपतति जवादुन्नमत्कण्ठनालो
भूयो वैरिप्रहारान्परिहरति परिभ्राम्यति प्रान्तमेति ।
उड्डीयोड्डीय चञ्चद्गरुदुरुमरुदुद्धूतपर्यन्तधूली-
पालीकं कुक्कुटेन्द्रः पदनखशिखरैरन्यमङ्गे निहन्ति ॥ १३४ ॥

अन्यच्च ।

अनतिविवृतपक्षः साधु संनह्य युद्धे
निजमिह न जहाति स्थानमानम्रचूडः ।
अनिमिषनिहिताक्षस्तूर्णमभ्युद्रवन्तं
प्रहरति परमुच्चैरुच्चलंस्ताम्रचूडः ॥ १३५ ॥

(स्तोकमन्तरं गत्वा निरूप्य च ।)

बकादिगरुदावलीवलितमौलिरुद्घोषय-
न्स्वकीयबिरुदावलीं भसितलेपभीमाकृतिः ।

भुजार्पितभुजङ्गपुंगवभयंकरोऽनुद्रुत-
प्लवङ्गमयुगान्वितः स्फुरति दारुणः कौशिकः ॥ १३६ ॥

अयं च

गुञ्जामणीखचितमास्यबिले निवेश्य
तुम्बीफलं क्रमचलाङ्गुलिना करेण ।
उच्छूनगण्डमुपरुद्धनिरस्तरन्ध्र-
मुच्चैर्मनोज्ञमुपगायति कौशिकोऽन्यः ॥ १३७ ॥

(श्रुतिमभिनीय ।)

भ्राम्यन्मन्दरकन्दरप्रसृमरव्याकीर्णदुग्धार्णव-
स्रोतस्तुङ्गवलत्तरङ्गपटलीनिध्वानविध्वंसनः ।
कल्पान्तोद्यमहाघनाघनघटासंघर्षघोषोद्भटो
रुन्धन्व्योम दिशश्च दुन्दुभिरवः स्फारं समुज्जृम्भते ॥ १३८ ॥

किमद्य दुन्दुभिनिर्घोषे कारणं भवेत् । (विचिन्त्य ।) असंशयमद्य वसन्तोत्सवे कावेरीतीरतिलकायमानं विमानाकारं मणिमण्डपमलंकर्तुकामस्य भगवतः पार्वतीवल्लभस्य प्रस्थानमङ्गलारम्भः संभावितः । तथा हि ।

आसिक्ता घनसारवारिभिरितोऽप्यासिच्यमानाः पुन-
र्लक्ष्यन्ते विशिखा विकीर्णसुमनःसंभारमाध्वीरसैः ।
बध्यन्ते परितः पुरं मणिमयप्रासादपङ्क्तिद्वय-
स्यूतानेकवितानतोरणगणैः साकं पताका अपि ॥ १३९ ॥

किं ब्रवीषि—'सत्यमेवैतत् ।

नीरन्ध्रं वियदन्तरं ध्वजपटच्छत्रच्छटाकोटिभिः
पुष्पैरद्य निरन्तरा वसुमती कुन्दारविन्दादिभिः ।
प्रत्याशं पुरमेतदायतदृशामोघैरमोघीकृतं
संपूर्णे पटवासपांसुनिकरैरत्रोत्सवे रोदसी ॥ १४० ॥

अत्र कतिचिदतिचिरं पतिगृहकारानिरुद्धतया कदाप्यविज्ञातबहिरङ्गणाः कुलाङ्गनाः कथमपि लब्धगुरुजनाभ्यनुज्ञानतया शनैःशनैर्निःसरन्त्यः, स्वच्छन्दं चरिष्यन्त्यः, स्वानुरूपतरुणावलोकनकुतूहलेन शतगुणीकृतोत्साहाः, नैसर्गिकशरीरसौन्दर्यातिरेकेण नयनसहस्रसंदर्शनीयाः, पश्यति चेदियमद्य

परिणतं पुण्यैरिति बोधमादधाना रसिकानाम्, विकिरन्त्यः कटाक्षाङ्कुरानभिरूपेषु, सानुरागं विचिन्वन्त्यः स्वाभिमतान्विलासिनः, यदृच्छया संनिहितेषु सहृदयेषु परस्परकटाक्षसंश्लेषणस्तिमिताः, सखीभिः साकं संलपन्त्य इव हन्त चिरस्य पश्यामि न स्मृतं तत्तादृगावयोराक्रीडितमिति जारैः संलपन्त्यः, अविगलितमपि धम्मिल्लमल्लीसरमभिमृशन्त्यः, कराग्रेणाप्रच्युतमप्युत्तरीयमुरसि मुहुः संविदधानाः, अस्थाने मन्दहासमारचयन्त्यः, अपदे किमप्युत्तरमुदीरयन्त्यः, वासवप्रेषिता इव स्वर्वारवनिताः, वारिदप्रच्युता इव विद्युल्लताः, जेष्यन्त्य इव जगन्ति, चेष्यन्त्य इव यशो मकरध्वजस्य, घनसारनिर्भरवीटिकापूरितकपोलमण्डला मण्डलायमाना मण्डयन्ति महावीथिकाम् ।' इति । तदावामपि साधयावः । (इति कतिचित्पदानि गत्वा पुरो विलोक्य च ।)

प्रसवमयविमानमध्यराजद्रजतमनोहरपुंगवाधिरूढः ।
प्रभुरिह पुरतः पुरामरातिः प्रचलति संप्रति पार्वतीसनाथः ॥ १४१ ॥

('हर हर' इति शिरस्यञ्जलिं बद्ध्वा ।)

सोढुं नालमहं मनोभवकृतां बाधामसाधारणीं
त्वामार्तः शरणं व्रजामि मदनद्वेषिन्दयावारिधे ।
मां संयोजय कान्तया विरहिणं किं जीवितेनान्यथा
किं न ज्ञातमिदं त्वया वितरता वामं प्रियायै वपुः ॥ १४२ ॥

(पुरो विलोक्य सभयकम्पम् ।)

अयमिह महाशुण्डादण्डप्रकाण्डपरिभ्रम-
प्रकटितदुराधर्षोत्कर्षप्रभावसमन्वितः ।
मदपरवशः कृत्ताकृष्टार्धपीवरशृङ्खला-
कृतझणझणात्कारोदारः करी परिदृश्यते ॥ १४३ ॥

हन्त हन्त,

करिणि मदालसे स्फुरति शैल इव प्रचले
धुरि परितो विशीर्णहृदयोऽखिलपौरजनः ।
पतति पुनः समुत्पतति धावति रोदिति च
प्रचलति च वेपते भ्रमति पश्यति विलसति ॥ १४४ ॥

कथमत्र संभ्रमे पलायमानैः सह पलायितो वयस्यः कामन्तकः । (विचिन्त्य ।) नायं मदान्धो गन्धद्विपः किंतु प्रथमसमाराधनाकरणपरिकुपितस्य भगवतः करिवदनस्य प्रादुर्भाव एव। तदेनं स्तुत्या सान्त्वयिष्यामि तावत् ।

अञ्जलिरयं जनानामातङ्कच्छेदबिरुदाय ।
वरदाय दिव्यगन्धद्विरदाय ध्वस्तसर्वदुरिताय ॥ १४५ ॥
जय जय जगतां मूल जय जय भो जन्मकल्मषद्वेषिन् ।
गजवक्त्र विघ्नशत्रो सुत्रामस्तुतचरित्र शिवपुत्र ॥ १४६ ॥

कथमेष स्तुतमात्र एव प्रसन्न इव परावर्तते । (परिक्रम्य निरूप्य च ।) विविक्तरमणीयोऽयमुद्देशः ।

आचम्य सह्यतनयासलिलस्य लेश-
मालिप्य पङ्कजपरागमयीं विभूतिम् ।
वातो गृहीतमकरन्दरसोपहारो
देवं सभाजयितुकाम इवायमेति ॥ १४७ ॥

तदत्र स्थित्वात्मानं विनोदयिष्यामि । (इत्युपविश्य ।) कः पुनरभ्युपाय-स्तामधिगन्तुम् । अथवा सर्वं संविधास्यति चन्द्रमुखी । (निरूप्य ।) कथमुपस्थितैव चन्द्रमुखी । सखि, किम्वमोघा भवदीयप्रवृत्तिः । किं ब्रवीषि—'का पुनरत्र कोऽप्यन्तरवार्तासि' इति । अद्य किमवस्था कनकलता । किं ब्रवीषि—'किं वक्ष्यामि । त्वद्दर्शनमारभ्य

न वहति वधूराहारेऽपि स्पृहां न च मण्डने
न भजति निशानाथे मोदं न चन्दनवारिषु ।
बत न कुरुते शश्वत्प्रीतिं प्रियेऽपि सखीजने
श्रयति नितरामङ्गेष्वायासमेव निरन्तरम् ॥ १४८ ॥

अपि च ।

आस्रासारो हरति कुचयोरद्य हारस्य लक्ष्मीं
गण्डाश्लिष्यत्करनखरुचिः कर्णपूरस्य शोभाम् ।
कान्तायास्ते विरहदहनग्लानगात्र्याः किमन्य-
त्प्राणाः पञ्चाप्यहरहरलंकुर्वते कण्ठमेव ॥ १४९ ॥

एवं दुर्दशापन्नां तामवेक्ष्य वत्सला तज्जननी मामाहूय 'केनापि प्रकारेण वत्सामनोरथं पूरय' इति करमालम्ब्य प्रार्थितवती । तदद्य चन्द्रशालायां कनकलतया भवन्तं योजयिष्यामि ।' इति । कथं मे चम्पकमालिकां कण्ठे संधारयति ।

कण्ठे धृता विकचचम्पकमालिकेय-
मानन्दमावहति कंचिदभूतपूर्वम् ।
कन्दर्पकेलिकलहेषु तया सलील-
मेणीदृशा भुजलता विनिवेशितेव ॥ १५० ॥

परितुष्टोऽहम् । परिणतश्च वासरः ।

रक्तश्चुम्बति वारुणीमुखमसावम्भोजिनीवल्लभः
कान्ताभिः कमलोदरेषु मधुपाः संवेशमातन्वते ।
आपन्नप्रियविप्रयोगविधुरास्तिष्ठन्ति चक्राङ्गनाः
संकेतस्थलमुद्दिशन्ति कुलटाः साकं विटानां वरैः ॥ १५१ ॥

मज्जति पश्चिमसिन्धौ पङ्कजबन्धौ समं करैरखिलैः ।
सद्यस्तमःप्रबन्धैः सान्द्रीभूतं समन्ततो भुवनम् ॥ १५२ ॥

एतस्मिन्समये मनोभवशरव्यापारसंजीवने
ब्रह्माणः परदारसंगममहासत्रेषु ये दीक्षिताः ।
ते वात्स्यायनसंमतव्रत····तानुष्ठानबद्धस्पृहा
मोदन्ते परसुन्दरीकुचपरीरम्भक्रियारम्भिणः ॥ १५३ ॥

चन्द्रमुखि, एहि । गच्छावो यत्र सा मम प्राणनाडी । (परिक्रम्य । सोपानाधिरोहणं नाटयित्वा । निरूप्य च ।)

मृदुलास्तरणोपधानशय्यासविधारोपितदीप्रदीपरम्यम् ।
अभिरामवितानमायताक्ष्याः शयनागारमुदारमेतदास्ते ॥ १५४ ॥

कर्पूराञ्जनघुटिकाघनीकृता बहलकार्तिकज्योत्स्ना ।
मूर्ता कुसुम····राज्ञा मुग्धाक्षी भाति कनकलता ॥ १५५ ॥

चन्द्रमुखि, त्वं प्रथमं याहि प्रियसखीसमीपम् । अहमप्यनुपदमागत एव ।] कनकलते, सखीं प्रति किं ब्रवीषि—'कथमेषा प्रियसमीपं गता ।

मर्मच्छिदा मलयपर्वतमारुतेन
मामेष हन्ति सहितो मदनः शरारुः।
चेतोहरो यदि चिरायति जीवदायी
हा किं करोमि सखि संप्रति मन्दभाग्या॥ १५६॥'

इति। (उपसर्पन्।) कान्ते, मैवं वादीः।

अहमेव मन्दभाग्यः समागमने कृतविलम्बः।
प्रतिपालयत्यपि त्वं दूषयसि धन्यमात्मानम्॥ १५७

चन्द्रमुखि, कनकलतां किं ब्रवीषि—

'उत्कण्ठिता त्वं यदलाभदोषादुपस्थितोऽयं तव चित्तचोरः।
बद्ध्वा भुजाभ्यां कुचशैलभारं निवेशयास्योरसि निर्विशङ्कम्॥ १५८॥

कथमेषा सहसाध्वसोत्कम्पं नतमुखी तिष्ठति। चन्द्रमुखि, मां प्रति किं ब्रवीषि—

'प्रसर कादाचित्कं प्रौढातपतापखेदमनुभूतम्।
मोदस्व कुमुदवत्त्वं चन्द्रिकया गाढमुपगूढः॥ १५९॥'

इति।

शीर्णा त्वया चन्द्रमुखि प्रतिज्ञा मया च तीर्णो विरहार्णवोऽद्य।
मनोरथोऽयं परिपूरितो मे कल्याणमाशास्यति नः किमन्यत्॥ १६०॥

तथापीदमस्तु। (भरतवाक्यम्।)

श्रीवाचौ कुरुतां महत्सु विहृतिं त्यक्त्वा विरोधं समं
भूयः किंच मिलन्तु मङ्गलचया गोब्राह्मणेभ्योऽनिशम्।
भूपैर्नीतिपथानुसाररसिकैर्भूरस्तु राजन्वती
भूयादस्य कवेश्च शंकरपदध्यानानुरक्तं मनः॥ १६१॥

(इति निष्क्रान्तः।)

प्रागेव विंशद्वयसः प्रबन्धा नल्लाकवीन्द्रेण सुधीश्वरेण।
शृङ्गारसर्वस्वमिति प्रतीतः संदार्भितोऽयं सरसः प्रबन्धः॥ १६२॥

इति श्रीकौशिककुलजलधिराकासुधाकरश्रीबालचन्द्रमखिवरतनूभवश्रीनल्लाबुधकविशेखर-विरचितः शृङ्गारसर्वस्वं नाम भाणः संपूर्णः।

---